युष्माकमेव प्रथमं करिष्ये
विमोक्षधर्मामृतसंविभागम् ॥ ५९ ॥

अस्मत्प्रियं चाभिसमीक्षमाणै-
र्हिंसा भवद्भिर्विषवद्विवर्ज्या ।
लोभः परद्रव्यपरिग्रहेषु
वाग्गर्हिता मद्यमयश्च पाप्मा ॥ ६० ॥ 5

अथ ते यक्षास्तथेत्यस्मै प्रतिश्रुत्य प्रणम्य प्रदक्षिणीकृत्य चैनं तत्रैवान्तर्दधिरे। स्वमांस-शोणितप्रदाननिश्चयसमकालमेव तु तस्य महासत्त्वस्य

विकम्पमाना बहुधा वसुंधरा K 51
विघूर्णयामास सुवर्णपर्वतम् । 10
प्रसस्वनुर्दुन्दुभयश्च तद्गता
द्रुमाश्च पुष्पं ससृजुर्विकम्पनात् ॥ ६१ ॥

तदभ्रवद्व्योमनि मारुतेरितं
पतत्रिसेनेव[1] वितानवत्क्वचित् ।
विसृत्य माला ग्रथितेव कुत्रचि- 15
त्समं समन्तान्नृपतेर्व्यकीर्यत ॥ ६२ ॥

निवारयिष्यन्निव मेदिनीपतिं
समुद्धतावेगतया महार्णवः ।
जलैः प्रकृत्यभ्यधिकक्रमस्वनैः
प्रयाणसौजस्कवपुर्व्यरोचत ॥ ६३ ॥ 20

किमेतदित्यागतसंभ्रमस्ततः
सुराधिपस्तत्र विचिन्त्य कारणम् ।
नृपात्ययाशङ्कितत‍ूर्णमाययौ
नृपालयं शोकभयाकुलाकुलम् ॥ ६४ ॥

तथागतस्यापि तु तस्य भूपते- 25
र्मुखप्रसादात्सविशेषविस्मयः ।
उपेत्य तत्कर्म मनोज्ञया गिरा
प्रसादसंहर्षवशेन तुष्टुवे ॥ ६५ ॥

---

१ Mss. पतत्रसेनेव.

अहो प्रकर्षो बत सज्जनस्थिते-
रहो गुणाभ्यासनिधेरुदारता।
अहो परानुग्रहपेशला मति-
स्त्वदर्पणान्नाथवती बत क्षितिः॥ ६६॥

5 इत्यभिप्रशंस्यैनं[1] शक्रो देवेन्द्रः सद्यःक्षतरोहणसमर्थैर्दिव्यैर्मानुष्यकैरोषधिविशेषैर्निर्वेदनं यथापौराणं शरीरं कृत्वा दाक्षिण्यविनयोपचारमधुरं प्रतिपूजितस्तेन राज्ञा स्वमावासं प्रतिजगाम[2]॥

तदेवं परदुःखातुरा नात्मसुखमवेक्षन्ते महाकारुणिका इति को नाम धनमात्रकेऽप्यपेक्षां नोत्स्रष्टुमर्हतीति दायकजनसमुत्तेजनायां वाच्यम्। करुणावर्णेऽपि तथागतमाहात्म्ये 10 सत्कृत्य धर्मश्रवणे च। यच्चोक्तं भगवता—बहुकराः खल्वेते पञ्चका भिक्षव इति स्यादेतत्संधाय। तेन हि समयेन ते पञ्च यक्षा बभूवुः। तेषां भगवता यथाप्रतिज्ञातमेव प्रथमं धर्मामृतसंविभागः कृत इति॥

॥ इति मैत्रीबलजातकमष्टमम्॥



१ Mss. इत्यभिप्रशंस्यैनं, २ Mss. °जगामेति.

## ९ विश्वंतरजातकम् ।

न बोधिसत्त्वचरितं सुखमनुमोदितुमप्यल्पसत्त्वैः प्रागेवाचरितुम् । तद्यथानुश्रूयते—

सात्मीभूतेन्द्रियजयः पराक्रमनयविनयसंपदा समधिगतविजयश्रीर्वृद्धोपासननियमा- K 52
त्त्रय्यान्वीक्षिक्योरुपलब्धार्थतत्त्वः स्वधर्मकर्मानुरक्ताभिरनुद्विग्नसुखोचिताभिरनुरक्ताभिः प्रकृतिभिः
प्रकाश्यमानदण्डनीतिशोभः सम्यक्प्रवृत्तवार्ताविधिः संजयो नाम शिबीनां राजा बभूव । 5

गुणोदयैर्यस्य निबद्धभावा
कुलाङ्गनेवास नराधिपश्रीः ।
अतर्कणीयान्यमहीपतीनां
सिंहाभिगुप्तेव गुहा मृगाणाम् ॥ १ ॥

तपस्सु विद्यासु कलासु चैव 10
कृतश्रमा यस्य सदाभ्युपेताः ।
विशेषयुक्तं बहुमानमीयुः
पूजाभिराविष्क्रियमाणसाराः ॥ २ ॥

तस्य राज्ञः प्रतिपत्त्यनन्तरं प्रथितगुणगणनिरन्तरो विश्वंतरो नाम पुत्रो युवराजो
बभूव । [ अयमेव भगवाञ्छाक्यमुनिस्तेन समयेन । ] 15

युवापि वृद्धोपशमाभिराम-
स्तेजस्व्यपि क्षान्तिसुखस्वभावः ।
विद्वानपि ज्ञानमदानभिज्ञः
श्रिया समृद्धोऽप्यवलेपशून्यः ॥ ३ ॥

दध्वप्रयामासु[१] च दिक्षु तस्य 20
व्याप्ते च लोकत्रितये यशोभिः ।
बभूव नैवान्ययशोलवानां
प्रसर्तुमुत्साह इवावकाशः ॥ ४ ॥

अमृष्यमाणः स जगद्गतानां
दुःखोदयानां प्रसृतावलेपम्[२] । 25
दानेषुवर्षी करुणोरुचाप-
स्तैर्युद्धसंरम्भमिवाजगाम ॥ ५ ॥

स प्रत्यहमभिगतमर्थिजनमभिलषिताधिकैरक्लिष्टैरर्थविसर्गैः प्रियवचनोपचारमनोहरै-
रतीव प्रह्लादयामास । पर्वदिवसेषु च पोषधनियमप्रशमविभूषणः शिरःस्नातः शुक्लक्षौमवासा

---

१ K °प्रयाणासु for °प्रयामासु. २ Mss. प्रभुतावलेपम्.

हिमगिरिशिखरसंनिकाशं मदलेखाभ्यलंकृतमुखं लक्षणविनयजवसत्त्वसंपन्नं गन्धहस्तिनं समाज्ञातमौपवाह्यं द्विरदवरमभिरुह्य समन्ततो नगरस्याभिनिविष्टान्यर्थिजननिपानभूतानि स्वानि सत्रागाराणि प्रत्यवेक्षते स्म । तथा च प्रीतिविशेषमभिजगाम ।

न हि तां कुरुते प्रीतिं विभूतिर्भवनाश्रिता ।
5 संक्रम्यमाणार्थिजने सैव दानप्रियस्य याम् ॥ ६ ॥

K 53 अथ कदाचित्तस्यैवंविधं दानप्रसङ्गं प्रमुदितहृदयैरर्थिभिः समन्ततो विकीर्यमाणमुपलभ्यान्यतमो भूम्यनन्तरस्तस्य राजा शक्यमयमभिसंधातुं दानानुरागवशगत्वादिति प्रतर्क्य द्विरदवरापहरणार्थं ब्राह्मणांस्तत्र प्रणिदधे । अथ ते ब्राह्मणा विश्वंतरस्य स्वानि सत्रागाराणि प्रत्यवेक्षमाणस्य प्रमोदादधिकतरनयनवदनशोभस्य जयाशीर्वादमुखराः समुच्छ्रिताभिप्रसारित-10 दक्षिणाग्रपाणयः पुरस्तात्समतिष्ठन्त । स ततो विनिगृह्य द्विरदवरमुपचारपुरःसरमभिगमनप्रयोजनमेनान् पर्यपृच्छत्—आज्ञाप्यतां केनार्थ इति । ब्राह्मणा ऊचुः—

अमुष्य तव नागस्य गतिलीलाविलम्बिनः ।
गुणैरर्थित्वमायाता दानशौर्याच्च ते वयम् ॥ ७ ॥
कैलासशिखराभस्य प्रदानादस्य दन्तिनः ।
15 कुरुष्व तावल्लोकानां विस्मयैकरसं मनः ॥ ८ ॥

इत्युक्ते बोधिसत्त्वः प्रीत्या समापूर्णहृदयश्चिन्तामापेदे—चिरस्य खलूदारप्रणयसुमुखमर्थिजनं पश्यामि । कः पुनरर्थ एवंविधेन द्विरदपतिनैषां ब्राह्मणानाम् ? व्यक्तमयं लोभेर्ष्याद्वेषपर्याकुलमनसः कस्यापि राज्ञः कार्पण्यप्रयोगः ।

आशाविघातदीनत्वं तन्मा भूत्तस्य भूपतेः ।
20 अनादृत्य यशोधर्मौ योऽस्मद्धित इवोद्यतः ॥ ९ ॥

इति विनिश्चित्य स महात्मा त्वरितमवतीर्य द्विरदवरात् प्रतिगृह्यतामिति समुद्यतकाञ्चनभृङ्गारस्तेषां पुरस्तादवतस्थे ।

ततः स विद्वानपि राजशास्त्र-
मर्थानुवृत्त्या गतधर्ममार्गम् ।
25 धर्मानुरागेण ददौ गजेन्द्रं
नीतिव्यलीकेन न संचकम्पे ॥ १० ॥

तं हेमजालरुचिराभरणं गजेन्द्रं
विद्युत्पिनद्धमिव शारदमभ्रराशिम् ।
K 54 दत्त्वा परां मुदमवाप नरेन्द्रसूनुः
संचुक्षुभे च नगरं नयपक्षपातात् ॥ ११ ॥
30

१ B °व्यग° for वेग?. २ A B तान्; P तां for ततो.

अथ द्विरदपतिप्रदानश्रवणात्समुदीर्णक्रोधसंरम्भाः शिवयो ब्राह्मणवृद्धा मन्त्रिणो योधाः पौरमुख्याश्च कोलाहलमुपजनयन्तः संजयं राजानमभिगम्य ससंभ्रमामर्षसंरम्भात्परिशिथिलोपचारयन्त्रणमूचुः—किमियं देव राज्यश्रीर्विलुप्यमानैवमुपेक्ष्यते ? नार्हति देवः स्वराज्योपप्लवमेवमभिवर्धमानमुपेक्षितुम् । किमेतदिति च सावेगमुक्ता राज्ञा पुनरेवमूचुः—कस्माद्देवो न जानीते ? 5

निषेव्य मत्तभ्रमरोपगीतं
यस्याननं दानसुगन्धि वायुः ।
मदावलेपं परवारणाना-
मायासदुःखेन विना प्रमार्ष्टि ॥ १२ ॥

यत्तेजसाक्रान्तबलप्रभावाः 10
संसुप्तदर्पा इव विद्विषस्ते ।
विश्वंतरेणैष गजः स दत्तो
रूपी जयस्ते ह्रियतेऽन्यदेशम् ॥ १३ ॥

गावः सुवर्णं वसनानि भोज्य-
मिति द्विजेभ्यो नृप देयरूपम् । 15
यस्मिञ्जयश्रीर्नियता द्विपेन्द्रे
देयः स नामेत्यतिदानशौर्यम् ॥ १४ ॥

नयोत्पथेनैनमिति व्रजन्तं
कथं समन्वेष्यति राजलक्ष्मीः ।
नोपेक्षणं देव तवात्र युक्तं 20
पुरायमानन्दयति द्विषस्ते ॥ १५ ॥

तच्छ्रुत्वा स राजा पुत्रप्रियत्वात्किंचित्तानिव प्रत्यप्रीतमनाः कार्यानुरोधात्सावेगवदेवमित्युक्त्वा समनुनेष्यञ्छिवीनुवाच—जाने दानप्रसङ्गव्यसनितां नीतिक्रमानपेक्षां विश्वंतरस्य । न चैष क्रमो राज्यधुरि संनियुक्तस्य । दत्तं त्वनेन स्वं हस्तिनं वान्तकल्पं कः प्रत्याहरिष्यति ? अपि तु तथाहमेवं करिष्ये यथा दाने मात्रां ज्ञास्यति विश्वंतरः । तदलमत्र वः संरम्भेणेति । 25 शिबय ऊचुः—न खलु महाराज परिभाषामात्रसाध्योऽस्मिन्नर्थे विश्वंतर इति । संजय उवाच—अथ किमन्यदत्र मया शक्यं कर्तुम् ?

दोषप्रवृत्तेर्विमुखस्य यस्य
गुणप्रसङ्गा व्यसनीक्रियन्ते । K 55
बन्धो वधो वात्मसुतस्य तस्य 30
किं निष्क्रियः स्याद्द्विरदस्य तस्य ॥ १६ ॥

---

१ A एनम् for एवम्. २ Mss. °हमेनं for °हमेव. ३ Mss. निष्क्रियः.

तदलमत्र वः संरम्भेण । निवारयिष्याम्यहमतो विश्वंतरमिति । अथ शिबयः समुदीर्णमन्यवो राजानमूचुः—

को वा वधं बन्धनताडनं वा
सुतस्य ते रोचयते नरेन्द्र ।
5 धर्मात्मकस्त्वेष न राज्यभार-
क्षोभस्य सोढा करुणामृदुत्वात् ॥ १७ ॥

सिंहासनं तेजसि लब्धशब्दा-
स्त्रिवर्गसेवानिपुणा भजन्ते ।
धर्मानुरागान्नयनिर्व्यपेक्ष-[1]
10 स्तपोवनाध्यासनयोग्य एषः ॥ १८ ॥

फलन्ति कामं वसुधाधिपानां
दुर्नीतिदोषास्तदुपाश्रितेषु ।
सह्यास्त एषां तु तथापि दृष्टा
मूलोपरोधान्न तु पार्थिवानाम् ॥ १९ ॥

15 किमत्र वा बह्वभिधाय निश्चय-
स्त्वयं शिबीनां त्वद्भूल्यमर्षिणाम् ।
प्रयातु वङ्कं तपसोऽभिवृद्धये
नृपात्मजः सिद्धनिषेवितं गिरिम् ॥ २० ॥

अथ स राजा स्नेहप्रणयविस्रम्भवशादनयापायदर्शिना हितोद्यतेन तेन जनेन परि-
20 निष्ठुरमित्यभिधीयमानः प्रकृतिकोपाद्व्रीडावनतवदनः पुत्रवियोगचिन्तापरिगतहृदयः सायासमभिनिश्वस्य शिबीनुवाच—यद्येष भवतां निर्बन्धस्तदेकमप्यहोरात्रमस्य मृष्यताम् । प्रभातायां रजन्यामभिप्रेतं वोऽनुष्ठाता विश्वंतर इति । एवमस्त्विति च प्रतिगृहीतानुनयः शिबिभिः स राजा क्षत्तारमुवाच—गच्छेमं वृत्तान्तं विश्वंतराय निवेदयेति । स तथेति प्रतिश्रुत्य शोकाश्रुपरिषिक्तवदनो विश्वंतरं स्वभवनगतमुपेत्य शोकदुःखावेगात्सस्वरं रुदन् पादयोरस्य
25 न्यपतत् । अपि कुशलं राजकुलस्येति च ससंभ्रमं विश्वंतरेणानुयुक्तः समवसीदन्नविशदपदाक्षरमेनमुवाच—कुशलं राजकुलस्येति[2] । अथ कस्मादेवमधीरोऽसीति च पुनरनुयुक्तो विश्वंतरेण क्षत्ता बाष्पवेगोपरुध्यमानगद्गदकण्ठः श्वासविस्खलितलुलिताक्षरं शनैरित्युवाच—

K 56

सान्त्वगर्भामनादृत्य नृपाज्ञामप्यदक्षिणाः ।
राष्ट्रात्प्रव्राजयन्ति त्वां कुपिताः शिबयो नृप ॥ २१ ॥

30 विश्वंतर उवाच—मां शिबयः प्रव्राजयन्ति कुपिता इति कः संबन्धः ?

---

१ K °निरपेक्ष°. २ Mss. राजकुलायेति.

रमे[1] न विनयोन्मार्गे द्वेष्मि चाहं प्रमादिताम् ।
कुत्र मे शिवयः क्रुद्धा यन्न पश्यामि दुष्कृतम् ॥ २२ ॥

क्षत्तोवाच—अत्युदारतायाम् ।

अलोभशुभ्रा त्वयि तुष्टिरासी-
ल्लोभाकुला याचकमानसेषु । 5
दत्ते त्वया मानद वारणेन्द्रे
धैर्याणि कोपस्त्वहरच्छिबीनाम् ॥ २३ ॥

इत्यतीताः स्वमर्यादां रभसाः शिवयस्त्वयि ।
येन प्रव्राजिता यान्ति पथा तेन किल व्रज ॥ २४ ॥

अथ बोधिसत्त्वः कृपाभ्यासरूढां याचनकजनवत्सलतां धैर्यातिशयसंपदं च 10
स्वामुद्भावयन्नुवाच—चपलस्वभावाः खलु शिवयोऽनभिज्ञा इव चास्मत्स्वभावस्य ।

द्रव्येषु बाह्येषु क एव वादो
दद्यामहं स्वे नयने शिरो वा ।
इमं हि लोकार्थमहं बिभर्मि
समुच्छ्रयं किम्वथ[2] वस्त्रवाह्यम् ॥ २५ ॥ 15

यस्य स्वगात्रैरपि याचकानां
वचांसि संपूजयितुं[3] मनीषा ।
भयान्न दद्यात्स इति प्रतर्कः
प्रकाशना बालिशचापलस्य ॥ २६ ॥

कामं मां शिवयः सर्वे घ्नन्तु प्रव्राजयन्तु वा । 20
न त्वेवाहं न दास्यामि गच्छाम्येष तपोवनम् ॥ २७ ॥

अथ बोधिसत्त्वो विप्रियश्रवणविक्लवमुखीं पत्नीमुवाच—श्रुतोऽत्रभवत्या शिबीनां
निश्चयः ? मद्र्युवाच—श्रुतोऽयं देव । विश्वंतर उवाच—

तद्यदस्ति धनं किंचिदस्मत्तोऽधिगतं त्वया ।
निधेहि तदनिन्द्याक्षि यच्च ते पैतृकं धनम् ॥ २८ ॥ 25

मद्र्युवाच—कुत्रैतद्देव निदधामीति ? विश्वंतर उवाच— K 57

शीलवद्भ्यः सदा दद्या दानं सत्कारशोभनम् ।
तथा हि निहितं द्रव्यमहार्यमनुगामि च ॥ २९ ॥

---

१ K रेमे. २ Mss. किम्वतः for किम्वथ. ३ Mss. संपूजितुं.

प्रियं श्वशुरयोः कुयाः पुत्रयोः परिपालनम्।
धर्ममेवाप्रमादं च शोकं मद्विरहात्तु मा॥ ३०॥

तच्छ्रुत्वा मद्री संतप्तहृदयापि भर्तुरधृतिपरिहारार्थमनादृत्य शोकदैन्यमित्युवाच—

नैष धर्मो महाराज यद्यायाः वनमेककः।
5 तेनाहमपि यास्यामि[1] येन क्षत्रिय यास्यसि॥ ३१॥
त्वदङ्गपरिवर्तिन्या मृत्युरुत्सव एव मे।
मृत्योर्दुःखतरं तत्स्याज्जीवेयं यत्त्वया विना॥ ३२॥

नैव च खलु मे देव वनवासो दुःख इति प्रतिभाति। तथा हि।

निर्दुर्जनान्यनुपभुक्तसरित्तरूणि
10 नानाविहंगविरुतानि मृगाकुलानि।
वैडूर्यकुट्टिममनोहरशाद्वलानि
क्रीडावनाधिकसुखानि तपोवनानि॥ ३३॥

अपि च देव।

अलंकृताविमौ पश्यन् कुमारौ मालभारिणौ।
15 क्रीडन्तौ वनगुल्मेषु न राज्यस्य स्मरिष्यसि॥ ३४॥
ऋतुप्रयत्नरचिता वनशोभा नवा नवाः।
वने त्वां रमयिष्यन्ति सरित्कुञ्जाश्च सोदकाः॥ ३५॥
चित्रं विरुतवादित्रं पक्षिणां रतिकाङ्क्षिणाम्।
मदाचार्योपदिष्टानि नृत्तानि च शिखण्डिनाम्॥ ३६॥
20 माधुर्यानवगीतं च गीतं मधुपयोषिताम्।
वनेषु कृतसंगीतं हर्षयिष्यति ते मनः॥ ३७॥

K 58 आस्तीर्यमाणानि च शर्वरीषु
ज्योत्स्नादुकूलेन शिलातलानि।
संवाह्यमानो वनमारुतश्च
25 लब्धाधिवासः कुसुमद्रुमेभ्यः॥ ३८॥

चलोपलप्रस्खलितोदकानां
कला विरावाश्च सरिद्वधूनाम्।
विभूषणानामिव संनिनादाः
प्रमोदयिष्यन्ति वने मनस्ते॥ ३९॥

---

१ Mss. यास्यति for यास्यामि.

इत्यनुनीयमानः स दयितया वनप्रयाणपर्युत्सुकमतिरर्थिजनापेक्षया महाप्रदानं दातुमुपचक्रमे ॥

अथेमां विश्वंतरप्रव्राजनप्रवृत्तिमुपलभ्य राजकुले तुमुल आक्रन्दशब्दः प्रादुरभूत्। शोकदुःखावेगान्मूर्च्छापरीत इवार्थिजनो मत्तोन्मत्त इव च तत्तद्बहुविधं विललाप।

छायातरोः स्वादुफलप्रदस्य 5
च्छेदार्थमागूर्णपरश्वधानाम्।
धात्री न लज्जां यदुपैति भूमि-
र्व्यक्तं तदस्या हतचेतनत्वम् ॥ ४० ॥

शीतामलस्वादुजलं निपानं
विभित्सतामस्ति न चेन्निषेद्धा। 10
व्यर्थाभिधाना बत लोकपाला
विप्रोषिता वा श्रुतिमात्रकं वा ॥ ४१ ॥

अधर्मो बत जागर्ति धर्मः सुप्तोऽथवा मृतः।
यत्र विश्वंतरो राजा स्वस्माद्राज्यान्निरस्यते ॥ ४२ ॥

कोऽनर्थपटुसामर्थ्यो याच्ञानूर्जितवृत्तिषु। 15
अस्मास्वनपराधेषु वधाभ्युद्यमनिष्ठुरः ॥ ४३ ॥

अथ बोधिसत्त्वो नैकशतसहस्रसंख्यं मणिकनकरजतपरिपूर्णकोशं विविधधनधान्यनिचयवन्ति कोशकोष्ठागाराणि दासीदासयानवाहनवसनपरिच्छदादि च सर्वमर्थिभ्यो यथार्हमतिसृज्य शोकदुःखाभिभूतधैर्ययोर्मातापित्रोश्चरणावभिप्रणम्य सपुत्रदारः स्यन्दनवरमभिरुह्य पुण्याहघोषेणैव महतो जनकायस्याक्रन्दितशब्देन पुरवरान्निरगच्छत्। अनुरागवशगमनुयायिनं च जनं शोकाश्रुपरिक्लिन्नवदनं प्रयत्नाद्विनिवर्त्य स्वयमेव रथप्रग्रहान् प्रतिगृह्य येन वङ्कः पर्वतस्तेन प्रायात्। व्यतीत्य चाविक्लवमतिरुद्यानवनरुचिरमालिनं पुरवरोपचारमनुपूर्वेण प्रविरलच्छायद्रुमं विच्छिद्यमानजनसंपातं प्रविचरितमृगगणसंबाधदिगालोकं चीरीविरावोन्नादितमरण्यं प्रत्यपद्यत ॥ 20 K 59

अथैनं यदृच्छयाभिगता ब्राह्मणा रथवाहांस्तुरगानयाचन्त। 25

स वर्तमानोऽध्वनि नैकयोजने
सहायहीनोऽपि कलत्रवानपि।
प्रदानहर्षादनपेक्षितायति-
र्ददौ द्विजेभ्यश्चतुरस्तुरंगमान् ॥ ४४ ॥

अथ बोधिसत्त्वस्य स्वयमेव रथधुर्यतामुपगन्तुकामस्य गाढतरं परिकरमभिसंयच्छमानस्य रोहितमृगरूपिणश्चत्वारो यक्षकुमाराः सुविनीता इव सदश्वाः स्वयमेव रथयुगं स्कन्धप्रदेशैः प्रत्यपद्यत। तांस्तु दृष्ट्वा हर्षविस्मयविशालतराक्षीं मद्रीं बोधिसत्त्व उवाच– 30

तपोधनाध्यासनसत्कृतानां[1]

पश्य प्रभावातिशयं वनानाम्।

यत्रैवमभ्यागतवत्सलत्वं

संरूढमूलं मृगपुंगवेषु ॥ ४५ ॥

5 मद्र्युवाच—

तवैवाहमिमं मन्ये प्रभावमतिमानुषम्।

रूढोऽपि हि गुणाभ्यासः सर्वत्र न समः सताम् ॥ ४६ ॥

तोयेषु ताराप्रतिबिम्बशोभा

विशेष्यते यत्कुमुदप्रहासैः।

10 कौतूहलाभिप्रसृता इवेन्दो-

र्हेतुत्वमत्राग्रकराः प्रयान्ति ॥ ४७ ॥

इति तयोरन्योन्यानुकूल्यात्परस्परं[2] प्रियं वदतोरध्वानं[3] गच्छतोरथापरो[4] ब्राह्मणः समभिगम्य बोधिसत्त्वं रथवरमयाचत—

ततः स्वसुखनिःसङ्गो याचकप्रियबान्धवः।

15 पूरयामास विप्रस्य स रथेन मनोरथम् ॥ ४८ ॥

अथ बोधिसत्त्वः प्रीतमना रथादवतार्य स्वजनान्निर्यात्य रथवरं ब्राह्मणाय जालिनं कुमारमङ्केनादाय पद्भ्यामेवाध्वानं प्रत्यपद्यत। अविमनस्कैव च मद्री कृष्णाजिनां कुमारी-मङ्केनादाय पृष्ठतोऽन्वगच्छदेनम् ॥

निमन्त्रयामासुरिव द्रुमास्तं

20 हृद्यैः फलैरानमिताग्रशाखाः।

पुण्यानुभावादभिवीक्षमाणाः

शिष्या विनीता इव च प्रणेमुः ॥ ४९ ॥

K 60 हंसांसविक्षोभितपङ्कजानि

किञ्जल्करेणुस्फुटपिञ्जराणि।

25 प्रादुर्बभूवुश्च सरांसि तस्य

तत्रैव यत्राभिचकाङ्क्ष वारि ॥ ५० ॥

वितानशोभां दधिरे पयोदाः

सुखः सुगन्धिः प्रववौ नभस्वान्।

परिश्रमक्लेशममृष्यमाणा

यक्षाश्च संचिक्षिपुरस्य मार्गम् ॥ ५१ ॥

30

---

१ Mss. तपोवना° for तपोधना°. २ A B तयोस्तेषामानु° for तयोरन्योन्यानु°. ३ A B वदताम् for वदतोः. ४ A गच्छतः अथ; B गच्छतस्तां; P गच्छतस्ताम्। अथ.

इति बोधिसत्त्व उद्यानगत इव पादचारविनोदनसुखमनुभवन् मार्गपरिखेदरसमनास्वाद्य सपुत्रदारः प्रान्[1]त एव तु वङ्कपर्वतमपश्यत् । तत्र च पुष्पफलपल्लवालंकृतस्निग्धविविधरुचिरतरुवरनिचितं मदमुदितविहंगबहुविधरुतविनदं प्रवृत्तनृत्तबर्हिगणोपशोभितं प्रविचरितनैकमृगकुलं कृतपरिकरमिव विमलनीलसलिलया सरिता कुसुमरजोरुणसुखपवनं तपोवनं वनचरकादेशितमार्गः प्रविश्य विश्वकर्मणा शक्रसंदेशात्स्वयमभिनिर्मितां मनोज्ञदर्शनां 5
सर्वर्तुसुखां तत्र प्रविविक्तां पर्णशालामध्यावसत् ।

तस्मिन् वने दयितया परिचर्यमाणः
शृण्वन्नयत्नमधुरांश्च सुतप्रलापान् ।
उद्यानसंस्थ इव विस्मृतराज्यचिन्तः
संवत्सरार्धमधिकं स तपश्चचार ॥ ५२ ॥ 10

अथ कदाचिन्मूलफलार्थं गतायां राजपुत्र्यां पुत्रयोः परिपालननिमित्तमाश्रमपदमशून्यं कुर्वाणे राजपुत्रे मार्गरेणुपरुषीकृतचरणप्रजङ्घः परिश्रमक्षामनयनवदनो दण्डकाष्ठावबद्धस्कन्धावसक्तकमण्डलुर्ब्राह्मणः पत्न्या परिचारकानयनार्थं समर्पितदृढसंदेशस्तं देशमुपजगाम । अथ बोधिसत्त्वश्चिरस्यार्थिजनं दृष्ट्वाभिगतं मनःप्रहर्षात्समुपजायमाननयनवदनप्रसादः प्रत्युद्गम्य स्वागतादिप्रियवचनपुरःसरं प्रवेश्य चैनमाश्रमपदं कृतातिथि- 15
सत्कारमागमनप्रयोजनमपृच्छत् । अथ स ब्राह्मणो भार्यानुरागादुत्सारितधैर्यलज्जः प्रतिग्रहमात्रसज्जो नियतमर्थमीदृशमुवाच—

आलोको भवति यतः समश्च मार्गो K 61
लोकोऽयं व्रजति ततो न दुर्गमेण ।
प्रायोऽस्मिञ्जगति तु मत्सरान्धकारे- 20
णान्ये न प्रणयपदानि मे वहन्ति ॥ ५३ ॥

प्रदानशौर्योदितया यशःश्रिया
गतं च गन्तव्यमशेषतस्तव ।
अतोऽस्मि याच्ञाश्रममभ्युपेयिवान्
प्रयच्छ तन्मे परिचारकौ सुतौ ॥ ५४ ॥ 25

इत्युक्ते बोधिसत्त्वो महासत्त्वः
दानप्रीतौ कृताभ्यासः प्रत्याख्यातुमशिक्षितः ।
ददामीत्यवदद्धृष्टं दयितौ तनयावपि ॥ ५५ ॥

स्वस्त्यस्तु । तत्किमिदानीमास्यत इति च ब्राह्मणेनाभिहितः स महासत्त्वः प्रदानकथाश्रवणोपपतितविषादविप्लुताक्षयोः सुतयोः स्नेहावे[2]गोदवलम्बमानहृदयो बोधिसत्त्व 30
उवाच—

१ Mss. प्राप्त for प्रान्त. २ Mss. स्नेहवेग° for स्नेहावेग°.

दत्तावेतौ मया तुभ्यं किं तु मातानयोर्गता।
वनं मूलफलस्यार्थे सायमद्यागमिष्यति ॥ ५६ ॥

तया दृष्टावुपाघ्रातौ मालिनात्रभ्यलंकृतौ।
इहैकरात्रं विश्रम्य श्वो नेतासि सुतौ मम ॥ ५७ ॥

5 ब्राह्मण उवाच—अलमनेनात्रभवतो निर्बन्धेन।

गौणमेतद्धि नारीणां नाम वामा इति स्थितम्।
स्याच्चैव दानविघ्नस्ते तेन वासं न रोचये ॥ ५८ ॥

बोधिसत्त्व उवाच—अलं दानविघ्नशङ्कया। सहधर्मचारिणी मम सा। यथा वात्रभवते[1] रोचते। अपि च महाब्राह्मण।

10 सुकुमारतया बाल्यात्परिचर्यास्वकौशलात्।
कीदृशीं नाम कुर्यातां दासप्रीतिमिमौ तव ॥ ५९ ॥

दृष्ट्वा त्वित्थंगतावेतौ शिबिराजः पितामहः।
अद्धा दद्याद्यदिष्टं ते धनं निष्क्रयमेतयोः ॥ ६० ॥

K 62 यतस्तद्विषयं साधु त्वमिमौ नेतुमर्हसि।
15 एवं ह्यर्थेन महता धर्मेण च समेष्यसि ॥ ६१ ॥

(ब्राह्मण उवाच—) न शक्ष्याम्यहमाशीविषदुरासदं विप्रियोपायनेन राजानमभिगन्तुम्।

आच्छिन्द्यान्मदिमौ राजा दण्डं वा प्रणयेन्मयि।
यतो नेष्याम्यहमिमौ ब्राह्मण्याः परिचारकौ ॥ ६२ ॥

20 अथ बोधिसत्त्वो यथेष्टमिदानीमित्यपरिसमाप्तार्थमुक्त्वा सानुनयमनुशिष्य तनयौ परिचर्यानुकूल्ये प्रतिग्रहार्थमभिप्रसारिते ब्राह्मणस्य पाणौ कमण्डलुमावर्जयामास।

तस्य यत्नानुरोधेन पपाताम्बु कमण्डलोः।
पद्मपत्राभिताम्राभ्यां नेत्राभ्यां स्वयमेव तु ॥ ६३ ॥

अथ स ब्राह्मणो लाभातिहर्षात्संभ्रमा[2]कुलितमतिर्बोधिसत्त्वतनयापहरणत्वरया संक्षिप्त-25 पदमाशीर्वचनमुक्त्वा निर्गम्यतामित्याज्ञाकर्कशेन वचसा कुमारावाश्रमपदान्निष्काशयितु[3]मारेभे। अथ कुमारौ वियोगदुःखातिभारव्यथितहृदयौ पितरमभिप्रणम्य बाष्पोपरुध्यमाननयनावूचतुः—

अम्बा च तात निष्क्रान्ता त्वं च नौ दातुमिच्छसि।
यावत्तामपि पश्यावस्ततो दास्यति नौ भवान् ॥ ६४ ॥

---

१ Mss. अत्रभवतो for °भवते. २ Mss. ससंभ्रमा° for संभ्रमा°. ३ K निष्कामयितु°.

अथ स ब्राह्मणः पुरा मातानयोरागच्छति, अस्य वा पुत्रस्नेहात्पश्चात्तापः संभवतीति विचिन्त्य पद्मकलापमिवानयोर्हस्तानावध्य लतया संतर्जयन् विचेष्टमानौ पितरं प्रति व्यावर्तितवदनौ प्रकृतिसुकुमारौ कुमारौ प्रचकर्ष। अथ कृष्णाजिना कुमार्यपूर्वदुःखोपनिपातात्सस्वरं रुदती पितरमुवाच–

अयं मां ब्राह्मणस्तात लतया हन्ति निर्दयः।		5
न चायं ब्राह्मणो व्यक्तं धार्मिका ब्राह्मणाः किल॥ ६५॥		K 63

यक्षोऽयं ब्राह्मणच्छद्मा नूनं हरति खादितुम्।
नीयमानौ पिशाचेन तात किं नावुपेक्षसे॥ ६६॥

अथ जाली[1] कुमारो मातरमनुशोचयन्नुवाच–

नैवेदं मे तथा दुःखं यदयं हन्ति मां द्विजः।		10
नापश्यमम्बां यत्त्वद्य तद्विदारयतीव[2] माम्॥ ६७॥

रोदिष्यति चिरं नूनमम्बा शून्ये तपोवने।
पुत्रशोकेन कृपणा हतशावेव चातकी॥ ६८॥

अस्मदर्थे समाहृत्य वनान्मूलफलं बहु।
भविष्यति कथं न्वम्बा दृष्ट्वा शून्यं तपोवनम्॥ ६९॥		15

इमे नावश्वकास्तात हस्तिका रथकाश्च मे।
अतोऽर्धं देयमम्बायै शोकं तेन विनेष्यति॥ ७०॥

वन्द्यास्मद्वचनादम्बा वार्या शोकाच्च सर्वथा।
दुर्लभं हि पुनस्तात तव तस्याश्च दर्शनम्॥ ७१॥

एहि कृष्णे मरिष्यावः को न्वर्थो जीवितेन नौ।
दत्तावावां नरेन्द्रेण ब्राह्मणाय धनैषिणे॥ ७२॥

इत्युक्त्वा जग्मतुः॥

अथ बोधिसत्त्वस्तेनातिकरुणेन तनयप्रलापेनाकम्पितमतिरपि क इदानीं दत्त्वानुतापं करिष्यतीति निष्प्रतीकारेण शोकाग्निना विनिर्दह्यमानहृदयो विषवेगमूर्च्छापरिगत इव समुपरुध्यमानचेतास्तत्रैव निषसाद। शीतलानिल[3]व्यजनप्रतिलब्धसंज्ञश्च निष्कूजमिवाश्रमपदं तनयशून्यमभिवीक्ष्य बाष्पगद्गदसंनिरुद्धकण्ठ इत्यात्मगतमुवाच–		25

पुत्राभिधाने हृदये समक्षं प्रहरन्मम।
नाशङ्कत कथं नाम धिगलज्जो बत द्विजः॥ ७३॥

---

१ Mss. जालिनीकुमारो. २ Mss. °दारयतीति for °दारयतीव. ३ B शीतानिल°; P शीलानिल° for शीतलानिल°.

पत्तिकावनुपानत्कौ सौकुमार्यात्क्रमासहौ।
यास्यतः कथमध्वानं तस्य च प्रेष्यतां गतौ ॥ ७४ ॥

K 64
मार्गश्रमपरिम्लानौ कोऽद्य विश्रामयिष्यति।
क्षुत्तर्षदुःखाभिहतौ याचिष्येते कमेत्य वा ॥ ७५ ॥

5
मम तावदिदं दुःखं धीरतां कर्तुमिच्छतः।
का त्ववस्था मम तयोः सुतयोः सुखवृद्धयोः ॥ ७६ ॥

अहो पुत्रवियोगाग्निर्निर्दहत्येव मे मनः।
सतां तु[1] धर्मं संस्मृत्य कोऽनुतापं करिष्यति ॥ ७७ ॥

अथ मद्री विप्रियोपनिपातशंसिभिरनिष्टैर्निमित्तैरुपजनितवैमनस्या मूलफलान्यादाय
10 क्षिप्रतरमागन्तुकामापि व्यालमृगोपरुध्यमानमार्गा चिरतरेणाश्रमपदमुपजगाम। उचितायां च प्रत्युद्गमनभूमावाक्रीडास्थाने च तनयावपश्यन्ती भृशतरमरतिवशमगात् ॥

अनीप्सिताशङ्कितजातसंभ्रमा
ततः सुतान्वेषणचञ्चलेक्षणा।
प्रसक्तमाह्वानमसंपरिग्रहं
15
तयोर्विदित्वा व्यलपच्छुचातुरा ॥ ७८ ॥

समाजवद्यत्प्रतिभाति मे पुरा
सुतप्रलापप्रतिनादितं वनम्।
अदर्शनादद्य तयोस्तदेव मे
प्रयाति कान्तारमिवाशरण्यताम् ॥ ७९ ॥

20 किं नु खलु तौ कुमारौ—

क्रीडाप्रसङ्गश्रमजातनिद्रौ
सुप्तौ नु नष्टौ गहने वने वा।
चिरान्मदभ्यागमनादतुष्टौ
स्यातां क्वचिद्बालतया निलीनौ ॥ ८० ॥

25
रुवन्ति[2] कस्माच्च न पक्षिणोऽप्यमी
समाकुलास्तद्वधसाक्षिणो यदि।
तरंगभङ्गैरविनीतकोपया
हृतौ नु किं निम्नगयातिवेगया ॥ ८१ ॥

---

१ Mss. नु for तु. २ Mss. रुदन्ति for रुवन्ति.

अपीदानीं मे वितथा मिथ्याविकल्पाः भवेयुः। अपि राजपुत्राय सपुत्राय स्वस्ति स्यात्। अप्यनिष्टनिवेदिनां[1] निमित्तानां मच्छरीर एव विपाको भवेत्। किं नु खल्विदमनिमित्तापवृत्तप्रहर्षमरतितमिस्रयावच्छाद्यमानं विद्रवतीव हृदयम्। विस्रस्यन्त इव मे गात्राणि। व्याकुला इव दिग्विभागाः। भ्रमतीव चेदं परिध्वस्तलक्ष्मीकं वनमिति॥

K 65

अथानुप्रविश्याश्रमपदमेकान्ते निक्षिप्य मूलफलं यथोपचारपुरःसरं भर्तारमभिगम्य 5 क दारकाविति पप्रच्छ। अथ बोधिसत्त्वो जानानः स्नेहदुर्बलतां मातृहृदयस्य दुर्निवेद्यत्वाच्च विप्रियस्य नैनां किंचिद्वक्तुं शशाक।

जनस्य हि प्रियार्हस्य विप्रियाख्यानवह्निना।
उपेत्य मनसस्तापः सघृणेन सुदुष्करः॥ ८२॥

अथ मद्री व्यक्तमकुशलं मे पुत्रयोः, यदयमेवं तूष्णींभूतः शोकदैन्यानुवृत्त्यैवेत्यवधार्य 10 समन्ततः क्षिप्तचित्तेव विलोक्याश्रमपदं तनयावपश्यन्ती सबाष्पगद्गदं पुनरुवाच—

दारकौ च न पश्यामि त्वं च मां नाभिभाषसे।
हता खल्वहं कृपणा विप्रियं हि न कथ्यते॥ ८३॥

इत्युक्त्वा शोकाग्निना परिगतहृदया छिन्नमूलेव लता निपपात। पतन्तीमेव चैनां परिगृह्य बोधिसत्त्वस्तृणशयनमानीय शीताभिरद्भिः परिषिच्य प्रत्यागतप्राणां समाश्वासयन्नुवाच— 15

सहसैव न ते मद्रि दुःखमाख्यातवानहम्।
न हि संभाव्यते धैर्यं मनसि स्नेहदुर्बले॥ ८४॥
जरादारिद्र्यदुःखार्तो ब्राह्मणो मामुपागमत्।
तस्मै दत्तौ मया पुत्रौ समाश्वसिहि मा शुचः॥ ८५॥
मां पश्य मद्रि मा पुत्रौ परिदेवीश्च देवि मा। 20
पुत्रशोकसशल्ये मे प्रहार्षीरिव मा हृदि॥ ८६॥
याचितेन कथं शक्यं न दातुमपि जीवितम्।
अनुमोदस्व तद्भद्रे पुत्रदानमिदं मम॥ ८७॥

तच्छ्रुत्वा मद्री पुत्रविनाशशङ्काव्यथितहृदया पुत्रयोर्जीवितप्रवृत्तिश्रवणात्प्रतनूभूतशोकक्लमा भर्तुरधृतिपरिहारार्थं प्रमृज्य नयने सविस्मयमुदीक्षमाणा भर्तारमुवाच—आश्चर्यम्। 25 किं बहुना?

K 66

नूनं विस्मयवक्तव्यचेतसोऽपि दिवौकसः।
यदित्यलब्धप्रसरस्तव चेतसि मत्सरः॥ ८८॥

---

१ Mss. °निवेदितानां for °निवेदिनां.

तथा हि दिक्षु प्रसृतप्रतिस्वनैः
समन्ततो दैवतदुन्दुभिस्वनैः ।
प्रसक्तविस्पष्टपदाक्षरं नभ-
स्तवैव कीर्तिप्रथनादरादभूत् ॥ ८९ ॥

5 प्रकम्पिशैलेन्द्रपयोधरा धरा
मदादिवाभूदभिवृद्धवेपथुः ।
दिवः पतद्भिः कुसुमैश्च काञ्चनैः
सविद्युदुद्द्योतमिवाभवन्नभः ॥ ९० ॥

तदलं शोकदैन्येन दत्वा चित्तं प्रसादय ।
10 निपानभूतो लोकानां दातैव च पुनर्भव ॥ ९१ ॥

अथ शक्रो देवेन्द्रः क्षितितलचलनादाकम्पिते विविधरत्नप्रभोद्भासिनि सुमेरौ पर्वतराजे किमिदमिति समुत्पन्नविमर्शो विस्मयोत्फुल्लनयनेभ्यो लोकपालेभ्यः पृथिवीकम्पकारणं विश्वंतरपुत्रदानमुपलभ्य प्रहर्षविस्मयाघूर्णितमनाः प्रभातायां तस्यां रजन्यां ब्राह्मणरूपी विश्वंतरमर्थिवदभ्यगच्छत् । कृतातिथिसत्कारश्च बोधिसत्त्वेन केनार्थ इत्युपनिमन्त्रितो भार्या-
15 मेनमयाचत—

महाह्रदेष्वम्भ इवोपशोषं
न दानधर्मः समुपैति सत्सु ।
याचे ततस्त्वां सुरसंनिभां[1] या
भार्यामिमामर्हसि तत्प्रदातुम् ॥ ९२ ॥

20 अविमना एव तु बोधिसत्त्वस्तथेत्यस्मै प्रतिशुश्राव ।
ततः स वामेन करेण मद्री-
मादाय सव्येन कमण्डलुं च ।
न्यपातयत्तस्य जलं कराग्रे
मनोभुवश्चेतसि शोकवह्निम् ॥ ९३ ॥

25 चुकोप मद्री न तु नो रुरोद
विवेद सा तस्य हि तं स्वभावम् ।
अपूर्वदुःखातिभरातुरा तु
तं प्रेक्षमाणा लिखितैव तस्थौ ॥ ९४ ॥

तद्दृष्ट्वा परमविस्मयाक्रान्तहृदयः शक्रो देवानामिन्द्रस्तं महासत्त्वमभिष्टुवन्नुवाच—

---

१ A °संनिभा यां; B °संनिभां यां for संनिभा या.

अहो विक्लृष्टान्तरता[1] सदसद्धर्मयोर्यथा।
श्रद्धातुमपि कर्मेदं का शक्तिरकृतात्मनाम् ॥ ९५ ॥

K 67

अवीतरागेण सता पुत्रदारमतिप्रियम्।
निःसङ्गमिति दातव्यं का नामेयमुदात्तता ॥ ९६ ॥

असंशयं त्वद्गुणरक्तसंकथैः 5
प्रकीर्यमाणेषु यशस्सु दिक्षु ते।
तिरोभविष्यन्त्यपरा यशःश्रियः
पतंगतेजस्सु यथान्यदीप्तयः ॥ ९७ ॥

तस्य तेऽभ्यनुमोदन्ते कर्मेदमतिमानुषम्।
यक्षगन्धर्वभुजगास्त्रिदशाश्च सवासवाः ॥ ९८ ॥ 10

इत्युक्त्वा शक्रः स्वमेव[2] वपुरभिज्वलदास्थाय शक्रोऽहमस्मीति च निवेद्यात्मानं बोधिसत्त्वमुवाच—

तुभ्यमेव प्रयच्छामि मद्रीं भार्यामिमामहम्।
व्यतीत्य न हि शीतांशुं चन्द्रिका स्थातुमर्हति ॥ ९९ ॥

तन्मा चिन्तां पुत्रयोर्विप्रयोगा- 15
द्राज्यभ्रंशान्मा च संतापमागाः।
सार्धं ताभ्यामभ्युपेतः पिता ते
कर्ता राज्यं त्वत्सनाथं सनाथम् ॥ १०० ॥

इत्युक्त्वा शक्रस्तत्रैवान्तर्दधे। शक्रानुभावाच्च स ब्राह्मणो बोधिसत्त्वतनयौ शिविविषयमेव संप्रापयामास। अथ शिवयः संजयश्च शिविराजस्तदतिकरुणमतिदुष्करं च 20 बोधिसत्त्वस्य कर्म श्रुत्वा समाक्लेदितहृदया ब्राह्मणहस्तान्निष्क्रीय बोधिसत्त्वतनयौ प्रसाद्यानीय च विश्वंतरं राज्य एव प्रतिष्ठापयामासुः ॥

तदेवमत्यद्भुता बोधिसत्त्वचर्येति तदुन्मुखेषु सत्त्वविशेषेषु नावज्ञा प्रतीघातो वा करणीयः। तथागतवर्णे सत्कृत्य धर्मश्रवणे चोपनेयम्।

॥ इति विश्वंतरजातकं नवमम् ॥ 25

———

1 Mss. विप्रकृष्टान्तरता. 2 Mss. स्वयमेव for स्वमेव.

## १० यज्ञजातकम् ।

न कल्याणाशयाः पापप्रतारणामनुविधीयन्त इत्याशयशुद्धौ प्रयतितव्यम् । तद्यथानुश्रूयते—

बोधिसत्त्वः किल स्वपुण्यप्रभावोपनतामानतसर्वसामन्तां प्रशान्तस्वपरचक्राद्युपद्रव-
5 त्वादकण्टकामसपत्नामेकातपत्रां दायाद्यक्रमागतां पृथिवीं पालयामास ।

K 68 नाथः पृथिव्याः स जितेन्द्रियारि-
भुंक्तावगीतेषु फलेष्वसक्तः ।
प्रजाहितेष्वाहितसर्वभावो
धर्मैककार्यो मुनिवद्बभूव ॥ १ ॥

विवेद लोकस्य हि स स्वभावं[1]
10 प्रधानचर्यानुकृतिप्रधानम् ।
श्रेयः समाधित्सुरतः प्रजासु
विशेषतो धर्मविधौ ससञ्जे ॥ २ ॥

ददौ धनं शीलविधिं समाददे
क्षमां निषेवे जगदर्थमैहत ।
15 प्रजाहिताध्याशयसौम्यदर्शनः
स मूर्तिमान् धर्म इव व्यरोचत ॥ ३ ॥

अथ कदाचित्तद्भुजाभिगुप्तमपि तं विषयं सत्त्वानां कर्मवैगुण्यात्प्रमादवशगत्वाच्च वर्ष-कर्माधिकृतानां देवपुत्राणां दुर्वृष्टिपर्याकुलता क्वचित्क्वचिदभिदुद्राव । अथ स राजा व्यक्तमयं मम प्रजानां वा धर्मापचारात्समुपनतोऽनर्थ इति निश्चितमतिः संरूढहिताध्याशयत्वात्प्रजासु
20 तद्दुःखममृष्यमाणो धर्मतत्त्वज्ञसंमतान् पुरोहितप्रमुखान् ब्राह्मणवृद्धान् मतिसचिवांश्च तदुद्धरणोपायं पप्रच्छ । अथ ते वेदविहितमनेकप्राणिशतवधारम्भभीषणं यज्ञविधिं सुवृष्टिहेतुं मन्यमानास्तस्मै संवर्णयामासुः । विदितवृत्तान्तस्तु स राजा यज्ञविहितानां प्राणिवैशसानां करुणात्मकत्वान्न तेषां तद्वचनं भावेनाभ्यनन्दत् । विनयानुवृत्त्या चैनान् प्रत्याख्यान-रूक्षाक्षरमनुक्त्वा प्रस्तावान्तरेणैषां तां कथां तिरश्चकार । ते पुनरपि तं राजानं
25 धर्मसंकथाप्रस्तावलब्धावसरा गाम्भीर्यावगूढं तस्य भावमजानाना यज्ञप्रवृत्तये समनुशशासुः—

कार्याणि राज्ञां नियतानि यानि
लाभे पृथिव्याः परिपालने च ।
नात्येति कालस्तव तानि नित्यं
तेषां क्रमो धर्मसुखानि यद्वत् ॥ ४ ॥

[1] A सर्वभावं for स स्वभावं.

त्रिवर्गसेवानिपुणस्य तस्य
प्रजाहितार्थं धृतकार्मुकस्य ।
यज्ञाभिधाने सुरलोकसेतौ
प्रमादतन्द्रेव[1] कथं मतिस्ते ॥ ५ ॥

भृत्यैरिवाज्ञा बहु मन्यते ते                                    5
साक्षादियं सिद्धिरिति क्षितीशैः ।
श्रेयांसि कीर्तिज्वलितानि चेतुं
यज्ञैरयं ते रिपुकाल कालः ॥ ६ ॥

कामं सदा दीक्षित एव च त्वं                                    K 69
दानप्रसङ्गान्नियमादराच्च ।                                    10
वेदप्रसिद्धैः क्रतुभिस्तथापि
युक्तं भवेन्मोक्तुमृणं सुराणाम् ॥ ७ ॥

स्विष्टयाभितुष्टानि हि दैवतानि
भूतानि वृष्टया प्रतिमानयन्ति ।
इति प्रजानां हितमात्मनश्च                                    15
यशस्करं यज्ञविधिं जुषस्व ॥ ८ ॥

तस्य चिन्ता प्रादुरभवत्—अतिदुर्न्यस्तो बतायं परप्रत्ययहार्यपेलवमतिरमीमांसको धर्मप्रियः श्रद्दधानो जनो यत्र हि नाम—

य एव लोकेषु शरण्यसंमता-
स्त एव हिंसामपि धर्मतो गताः ।                                    20
विवर्तते कष्टमपायसंकटे
जनस्तदादेशितकापथानुगः ॥ ९ ॥

को हि नामाभिसंबन्धो धर्मस्य पशुहिंसया ।
सुरलोकाधिवासस्य दैवतप्रीणनस्य वा ॥ १० ॥

विशस्यमानः किल मन्त्रशक्तिभिः                                    25
पशुर्दिवं गच्छति तेन तद्वधः ।
उपैति धर्मत्वमितीदमप्यसत्
परैः कृतं को हि परत्र लप्स्यते ॥ ११ ॥

---

१ Mss. प्रमादतन्त्रेव.

असत्प्रवृत्तेरनिवृत्तमानसः[1][2]
शुभेषु कर्मस्वविरूढनिश्चयः।
पशुर्दिवं यास्यति केन हेतुना
हतोऽपि यज्ञे स्वकृताश्रयाद्विना ॥ १२ ॥

5 हतश्च यज्ञे त्रिदिवं यदि व्रजे-
न्ननु व्रजेयुः पशुतां स्वयं द्विजाः।
यतस्तु नायं विधिरीक्ष्यते क्वचि-
द्वचस्तदेषां क इव ग्रहीष्यति ॥ १३ ॥

अतुल्यगन्धर्द्धिरसौजसं शुभां
10 सुधां किलोत्सृज्य वराप्सरोधृताम्।
मुदं प्रयास्यन्ति वपादिकारणा-
द्वधेन शोच्यस्य पशोर्दिवौकसः ॥ १४ ॥

तदिदमत्र प्राप्तकालमिति विनिश्चित्य स राजा यज्ञारम्भसमुत्सुक इव नाम तत्तेषां वचनं प्रतिगृह्यावोचदेनान्—सनाथः खल्वहमनुग्रहवांश्च यदेवं मे हितावहितमनसोऽत्रभवन्तः। 15 तदिच्छामि पुरुषमेधसहस्रेण यष्टुम्। अन्विष्यतां तदुपयोग्यसंभारसमुदानयनार्थं यथाधिकारममात्यैः[3]। परीक्ष्यतां सत्रागारनिवेशनयोग्यो[4] भूमिप्रदेशस्तदनुगुणश्च तिथिकरणमुहूर्तनक्षत्रयोग इति ॥

अथैनं पुरोहित उवाच—ईप्सितार्थसिद्धये स्नातु तावन्महाराज एकस्य यज्ञस्य समाप्ताववभृथे[5]। अथोत्तरेषामारम्भः करिष्यते क्रमेण। युगपत्पुरुषपशवः सहस्रशो हि 20 परिगृह्यमाणा व्यक्तमुद्वेगदोषाय प्रजानां ते स्युरिति। अस्त्वेतदिति ब्राह्मणैरुक्तः स राजा तानुवाच—अलमत्रभवतां प्रकृतिकोपाशङ्कया। तथा हि संविधास्ये यथोद्वेगं मे प्रजा न यास्यन्तीति। अथ स राजा पौरजानपदान् संनिपात्याब्रवीत्—इच्छामि पुरुषमेधसहस्रेण यष्टुम्। न च मयार्हः[6] कश्चिदकामः पुरुषः पशुत्वे नियोक्तुमदुष्टः। तद्यं यमतः प्रभृति वो द्रक्ष्यामि व्यवधूतप्रमादनिद्रेण विमलेन चारचक्षुषा शीलमर्यादातिवर्तिनमस्मदाज्ञां 25 परिभवन्तम्, तं तं स्वकुलपांसनं देशकण्टकमहं यज्ञपशुनिमित्तमादास्ये इत्येतद्वो विदितमस्त्विति। अथ तेषां मुख्यतमाः प्राञ्जलयो भूत्वैनमूचुः—

K 70

१ B असत्यवृत्तैः; P असत्त्ववृत्तैः for असत्प्रवृत्तेः. २ Mss. अनिवर्त°. ३ Mss. अमात्याः परीक्षन्ताम् for अमात्यैः। परीक्ष्यतां. ४ Mss. °निषेवन° for °निवेशन°. ५ A om. समाप्तौ. ६ Mss. मया for मयार्हः.

सर्वाः क्रियास्तव हितप्रवणाः प्रजानां
तत्रावमानविधेर्नरदेव कोऽर्थः ।
अत्रापि ते चरितमभ्यनुमन्तुमर्हः
साधुप्रमाण परमत्र भवान् प्रमाणम् ॥ १५ ॥

प्रियं यदेव देवस्य तदस्माकमपि प्रियम् । 5
अस्मत्प्रियहितादन्यद्दृश्यते न हि ते प्रियम् ॥ १६ ॥

इति प्रतिगृहीतवचनः पौरजानपदैः स राजा जनप्रकाशेनाडम्बरेण प्रत्ययितानमात्यान् पापजनोपग्रहणार्थं जनपदं नगराणि च प्रेषयामास समन्ततश्च प्रत्यहमिति घोषणाः कारयामास—

अभयमभयदो ददाति राजा 10
स्थिरशुचिशीलधनाय सज्जनाय ।
अविनयनिरतैः प्रजाहितार्थं
नरपशुभिस्तु सहस्रशो यियक्षुः ॥ १७ ॥

तद्यः कश्चिदतःप्रभृत्यविनयश्लाघानुवृत्त्युद्धवा-
त्सामन्तक्षितिपार्चितामपि नृपस्याज्ञामवज्ञास्यति । 15
स स्वैरेव विषह्य यज्ञपशुतामापादितः कर्मभि-
र्यूपाबद्धतनुर्विषादकृपणः शुष्यज्जनैर्द्रक्ष्यते ॥ १८ ॥

अथ तद्विषयनिवासिनः पुरुषा यज्ञपशुनिमित्तं दुःशीलपुरुषान्वेषणादरं तमन्ववेक्ष्य[1] राज्ञस्तां च घोषणामतिभीषणां प्रत्यहमुपशृण्वन्तः पापजनोपग्रहावहितांश्च राजपुरुषान् समन्ततः समापततोऽभिवीक्ष्य त्यक्तदौःशील्यानुरागाः शीलसंवरसमादानपरा वैरप्रसङ्गपरा- 20 ङ्मुखाः परस्परप्रेमगौरवसुमुखाः प्रशान्तविग्रहविवादा गुरुजनवचनानुवर्तिनः संविभाग- विशारदाः प्रियातिथयो विनयनैभृत्यश्लाघिनः कृत इव युगे बभूवुः । K 71

भयेन मृत्योः परलोकचिन्तया
कुलाभिमानेन यशोनुरक्षया ।
सुशुक्लभावाच्च विरूढया ह्रिया 25
जनः स शीलामलभूषणोऽभवत् ॥ १९ ॥

यथा यथा धर्मपरोऽभवज्जन-
स्तथा तथा रक्षिजनो विशेषतः ।
चकार दुःशीलजनाभिमार्गणा-
मतश्च धर्मान्न चचाल कश्चन ॥ २० ॥ 30

---

1 Mss. तमन्वेक्ष्य for तमन्ववेक्ष्य.

स्वदेशवृत्तान्तमथोपशुश्रुवा-
निमं नृपः प्रीतिविशेषभूषणः।
वरान् प्रियाख्यानकदानविस्तरैः
संतर्पयित्वा सचिवान् समन्वशात् ॥ २१ ॥

5 परा मनीषा मम रक्षितुं प्रजा
गताश्च ताः संप्रति दक्षिणीयताम्।
इदं च यज्ञाय धनं प्रतर्कितं
यियक्षुरस्मीति यथाप्रतार्कितम् ॥ २२ ॥

यदीप्सितं यस्य सुखेन्धनं धनं
10 प्रकाममाप्नोतु स तन्मदन्तिकात्।
इतीयमस्मद्विषयोपतापिनी
दरिद्रता निर्विषयी यथा भवेत् ॥ २३ ॥

मयि प्रजारक्षणनिश्चयस्थिते
सहायसंपत्परिवृद्धसाधने।
15 इयं जनार्तिर्मदमर्षदीपनी
मुहुर्मुहुर्मे ज्वलतीव चेतसि ॥ २४ ॥

अथ ते तस्य राज्ञः सचिवाः परममिति प्रतिगृह्य तद्वचनं सर्वेषु ग्रामनगरनिगमेषु मार्गविश्रामप्रदेशेषु च दानशालाः कारयित्वा यथासंदिष्टं राज्ञा प्रत्यहमर्थिजनमभिलषितैरर्थविसर्गैः संतर्पयामासुः।

20 अथ विहाय जनः स दरिद्रतां
सममवाप्तवसुर्वसुधाधिपात्।
विविधचित्रपरिच्छदभूषणः
प्रविततोत्सवशोभ इवाभवत् ॥ २५ ॥

K 72 प्रमुदितार्थिजनस्तुतिसंचितं
25 प्रवितताान नृपस्य दिशो यशः[१]।
तनुतरंगविवर्धितविस्तरं
सर इवाम्बुजकेसरजं रजः ॥ २६ ॥

इति नृपस्य सुनीतिगुणाश्रया-
त्सुचरितािभमुखे निखिले जने[२]।

---

१ Mss. दशः for यशः. २ K om. जने.

समभिभूतबलाः कुशलोच्छ्रयै-
विलयमीयुरसङ्गमुपद्रवाः ॥ २७ ॥

अविषमत्वसुखा ऋतवोऽभव-
न्नवनृपा इव धर्मपरायणाः ।
विविधसस्यधरा च वसुंधरा 5
सकमलामलनीलजलाशया ॥ २८ ॥

न जनमभ्यरुजन् प्रबला रुजः
पटुतरं गुणमोषधयो दधुः ।
ऋतुवशेन ववौ नियतोऽनिलः
परियियुश्च शुभेन पथा ग्रहाः ॥ २९ ॥ 10

न परचक्रकृतं समभूद्भयं
न च परस्परजं न च दैविकम् ।
नियमधर्मपरे निभृते जने
कृतमिवात्र युगं समपद्यत ॥ ३० ॥

अथैवं प्रवृत्तेन धर्मयज्ञेन राज्ञा प्रशमितेष्वर्थिजनदुःखेषु सार्धमुपद्रवैः प्रमुदितजन- 15
संबाधायामभ्युदयरम्यदर्शनायां वसुंधरायां नृपतेराशीर्वचनाध्ययनसंव्यापारे लोके वितन्यमाने समन्ततो राजयशसि प्रसादावर्जितमतिः कश्चिदमात्यमुख्यो राजानमित्युवाच—सुष्ठु खल्विद-मुच्यते—

उत्तमाधममध्यानां कार्याणां नित्यदर्शनात् ।
उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः ॥ ३१ ॥ 20

इति । देवेन हि पशुवैशसवाच्यदोषविरहितेन धर्मयज्ञेन प्रजानामुभयलोकहितं संपादितमुपद्रवाश्च प्रशमं नीताः, दारिद्र्यदुःखानि च शीले प्रतिष्ठापितानाम् । किं बहुना? सभाग्यास्ता प्रजाः ।

लक्ष्मेव क्षणदाकरस्य विततं गात्रे[3] न कृष्णाजिनं
दीक्षायन्त्रणया निसर्गललिता चेष्टा न मन्दोद्यमः[4] । 25
मूर्ध्नश्छत्रनिभस्य केशरचना शोभा तथैवाथ च
त्यागैस्ते शतयज्वनोऽप्यपहृतः कीर्त्याश्रयो विस्मयः ॥ ३२ ॥

---

१ Mss. संध्यापारे for सव्या°. २ A प्रशमितानीता ; B प्रशमितानित ; P प्रशमिता-नीलगा for प्रशमं नीताः. ३ Mss. गात्रेण for गात्रे न. ४ Mss. मन्दोयमाः.

K 73 हिंसाविषक्तः कृपणः फलेप्सोः
प्रायेण लोकस्य नयज्ञ यज्ञः ।
यज्ञस्तु कीर्त्याभरणः समस्ते
शीलस्य निर्दोषमनोहरस्य ॥ ३३ ॥

5 अहो प्रजानां भाग्यानि यासां गोपायिता भवान् ।
प्रजानामपि हि व्यक्तं नैवं स्याद्गोपिता पिता ॥ ३४ ॥

अपर उवाच–

दानं नाम धनोदये सति जनो दत्ते तदाशावशः
स्याच्छीलेऽपि च[1] लोकपक्त्यभिमुखः स्वर्गे च जातस्पृहः ।
10 या त्वेषा परकार्यदक्षिणतया तद्वत्प्रवृत्तिस्तयो-
र्नाविद्वत्सु न सत्त्वयोगविधुरेष्वेषा समालक्ष्यते ॥ ३५ ॥

तदेवं कल्याणाशया न पापप्रतारणामनुविधीयन्त इत्याशयशुद्धौ प्रयतितव्यम् ॥

इति प्रजाहितोद्योगः श्रेयःकीर्तिसुखावहः ।
यन्नृपाणामतो नालं तमनादृत्य वर्तितुम् ॥ ३६ ॥

15 एवं राजाववादेऽपि वाच्यम् । धर्माभ्यासः प्रजानां भूतिमावहतीति भूतिकामेन धर्मानुवर्तिना भवितव्यमित्येवमप्युन्नेयम् । न पशुहिंसा कदाचिदभ्युदयाय, दानदमसंयमादयस्त्वभ्युदयायेति तदर्थिना दानादिपरेण भवितव्यमित्येवमपि वाच्यम् । लोकार्थचर्याप्रवणमतिरेवं पूर्वजन्मस्वपि भगवानिति तथागतवर्णेऽपि वाच्यम् ॥

॥ इति यज्ञजातकं दशमम् ॥



---

१ K om. च.

## ११ शक्रजातकम् ।

आपदपि महात्मनामैश्वर्यसंपद्वा सत्त्वेष्वनुकम्पां न शिथिलीकरोति । तद्यथानुश्रूयते—

बोधिसत्त्वः किलानल्पकालस्वभ्यस्तपुण्यकर्मा सात्मीभूतप्रदानदमसंयमकरुणः परहितनियतक्रियातिशयः कदाचिच्छक्रो देवानामिन्द्रो बभूव ॥

सुरेन्द्रलक्ष्मीरधिकं रराज (5) (K 74)
तत्संश्रयात्स्फीततरप्रभावा ।
हर्म्ये सुधासेकनवाङ्गरागे
निषक्तरूपा[1] शशिनः प्रभेव ॥ १ ॥
यस्याः कृते दितिसुता रभसागतानि
दिङ्नागदन्तमुसलान्युरसाभिजग्मुः । (10)
सौभाग्यविस्तरसुखोपनतापि तस्य
लक्ष्मीर्न दर्पमलिनं हृदयं चकार ॥ २ ॥

तस्य दिवस्पृथिव्योः सम्यक्परिपालनोपार्जितां सर्वलोकानुव्यापिनीं कीर्तिसंपदं तां च लक्ष्मीमत्यद्भुतामसूर्ष्यमाणा[2] दैत्यगणाः कल्पनाटोपभीषणतरद्विरदरथतुरगपदातिना क्षुभितसागरघोरनिर्घोषेण जाज्वल्यमानविविधप्रहरणावरणदुर्निरीक्ष्येण[3] महता बलकायेन युद्धायैनमभिजग्मुः । (15)

धर्मात्मनोऽपि तु स तस्य परावलेपः
क्रीडाविघातविरसं च भयं जनस्य ।
तेजस्विता नयपथोपनतः क्रमश्च
युद्धोद्भवाभिमुखतां हृदयस्य चक्रुः ॥ ३ ॥ (20)

अथ स महासत्त्वस्तुरगवरसहस्रयुक्तमभ्युच्छ्रितार्हद्वसनचिह्नरुचिरध्वजं विविधमणिरत्नदीप्तिव्यवभासितमतिज्वलद्वपुषं कल्पनाविभागोपनियतनिशितज्वलितविविधायुधविराजितोभयपार्श्वं पाण्डुकम्बलिनं हैमं रथवरमभिरुह्य महता हस्त्यश्वरथपदातिविचित्रेण देवानीकेन परिवृतस्तदसुरसैन्यं समुद्रतीरान्त एव प्रत्युज्जगाम ॥

अथ प्रववृते तत्र भीरूणां धृतिर्दारणः[4] । (25)
अन्योन्यायुधनिष्पेषजर्जरावरणो रणः ॥ ४ ॥
तिष्ठ नैवमितः पश्य केदानीं मेऽत्र[5] मोक्ष्यसे ।
प्रहरायं न भवसीत्येवं तेऽन्योन्यमार्दयन् ॥ ५ ॥
ततः प्रवृत्ते तुमुले स्फूर्जत्प्रहरणे रणे । (K 75)
पटहध्वनिनो[6]त्कृष्टैः स्फुटतीव नभस्तलम् ॥ ६ ॥ (30)

---

१ Mss. निषिक्त° for निषक्त°. २ Mss. असूयमाणा. ३ Mss. दुर्निरीक्षेण. ४ Mss. °दारुणा for °दारणः. ५ B P मम for मत्र. ६ B °ध्वनितो° for °ध्वनिनो°.

दानगन्धोद्धतामर्षेष्वापतत्सु परस्परम्।
युगान्तवाताकलितशैलभीमेषु दन्तिषु ॥ ७ ॥

विद्युल्लोलपताकेषु प्रसृतेषु समन्ततः।
रथेषु पटुनिर्घोषेषूत्पाताम्बुधरेष्विव ॥ ८ ॥

5 पाल्यमानध्वजच्छत्रशस्त्रावरणमौलिषु।
देवदानववीरेषु शितैरन्योन्यसायकैः ॥ ९ ॥

अथ प्रतप्तासुरशस्त्रसायकै-
भयात्प्रदुद्राव सुरेन्द्रवाहिनी।
रथेन विष्टभ्य बलं तु विद्विषां
10 सुरेन्द्र एकः समरे व्यतिष्ठत ॥ १० ॥

अभ्युदीर्णं त्वासुरं बलमतिहर्षात्पटुतरोत्क्रुष्टक्ष्वेडितसिंहनादमभिपतितमभिसमीक्ष्य मातलिर्देवेन्द्रसारथिः स्वं च बलं पलायनपरमवेत्य अपयानमत्र प्राप्तकालमिति मत्वा देवाधिपतेः स्यन्दनमावर्तयामास। अथ शक्रो देवेन्द्रः समुत्पततो रथेषाग्राभिमुखान्यभिघातपथागतानि शाल्मलीवृक्षे गरुडनीडान्यपश्यत्। दृष्ट्वैव च करुणया समालम्ब्यमानहृदयो मातलिं 15 संग्राहकमित्युवाच—

अजातपक्षद्विजपोतसंकुला
द्विजालयाः शाल्मलिपादपाश्रयाः।
अमी पतेयुर्न यथा रथेषया
20 विचूर्णिता वाहय मे रथं तथा ॥ ११ ॥

मातलिरुवाच—अमी तावन्मार्ष समभियान्ति नो दैत्यसंघा इति। शक्र उवाच—ततः किम्? परिहरैतानि सम्यग्गरुडनीडानीति। अथैनं मातलिः पुनरुवाच—

निवर्तनादस्य रथस्य केवलं
शिवं भवेदम्बुरुहाक्ष पक्षिणाम्।
25 चिरस्य लब्धप्रसरा सुरेष्वसा-
वभिद्रवत्येव तु नो द्विषच्चमूः ॥ १२ ॥

अथ शक्रो देवेन्द्रः स्वमध्याशयातिशयं सत्त्वविशेषं च कारुण्यविशेषात्प्रकाशयन्नुवाच—

K 76 तस्मान्निवर्तय रथं वरमेव मृत्यु-
र्दैत्याधिपप्रहितभीमगदाभिघातैः।
30 धिग्वाददग्धयशसो न तु जीवितं मे
सत्त्वान्यमूनि भयदीनमुखानि हत्वा ॥ १३ ॥

अथ मातलिस्तथेति प्रतिश्रुत्य तुरगसहस्रयुक्तं स्यन्दनमस्य निवर्तयामास ।

दृष्टावदाना[1] रिपवस्तु तस्य

युद्धे समालोक्य रथं निवृत्तम् ।

भयद्रुताः[2] प्रस्खलिताः प्रणेमु-

र्वाताभिनुन्ना इव कालमेघाः ॥ १४ ॥　　　　5

भग्ने स्वसैन्ये विनिवर्तमानः

पन्थानमावृत्य रिपुध्वजिन्याः ।

संकोचयत्येव मदावलेप-

मेकोऽप्य[3]संभाव्यपराक्रमत्वात् ॥ १५ ॥

निरीक्ष्य भग्नं तु तदासुरं बलं　　　　10

सुरेन्द्रसेनाप्यथ सा न्यवर्तत ।

बभूव नैव प्रणयः सुरद्विषां

भयद्रुतानां विनिवर्तितुं यतः ॥ १६ ॥

सहर्षलज्जैस्त्रिदशैः सुराधिपः

सभाज्यमानोऽथ रणाजिराच्छनैः ।　　　　15

अभिज्वलच्चारुवपुर्जयश्रिया

समुत्सुकान्तःपुरमागमत्पुरम् ॥ १७ ॥

एवं स एव तस्य संग्रामस्य विजयो बभूव । तस्मादुच्यते–

पापं समाचरति वीतघृणो जघन्यः

प्राप्यापदं सघृण एव[4] तु मध्यबुद्धिः ।　　　　20

प्राणात्ययेऽपि तु न साधुजनः स्ववृत्तिं

वेलां समुद्र इव लङ्घयितुं समर्थः ॥ १८ ॥

तदेवं देवराज्यं प्राणानपि परित्यज्य दीर्घरात्रं परिपालितानि भगवता सत्त्वानि । तेष्विह प्राज्ञस्याघातो न युक्तरूपः प्रागेव विप्रतिपत्तिरिति प्राणिषु दयायत्तेनार्येण भवितव्यम् । तथा हि धर्मो ह[5] वै रक्षति धर्मचारिणमित्यत्राप्युन्नेयम् । तथागतवर्णे सत्कृत्य　25 धर्मश्रवणे चेति ॥

॥ इति शक्रजातकमेकादशम् ॥

———

१ A दृष्टापदाना; P दृष्ट्याध्ययाना for दृष्टावदाना. २ Mss. °द्रुतस्खलिंताः for °द्रुताः प्रस्ख°. ३ Mss. °पिं संभाव्य° for °प्यसंभाव्य°. ४ Mss. एवंविधं for एव तु. ५ Mss. हि for ह.

## १२ ब्राह्मणजातकम् ।

K 77 आत्मलज्जयैव सत्पुरुषा नाचारवेलां लङ्घयन्ति । तद्यथानुश्रूयते—

बोधिसत्त्वः किल कस्मिंश्चिदनुपक्रुष्टगोत्रचारित्रे स्वधर्मानुवृत्तिप्रकाशयशसि विनयाचारश्लाघिनि महति ब्राह्मणकुले जन्मपरिग्रहं चकार । स यथाक्रमं गर्भाधानपुंसवनसीमन्तो-
5 न्नयनजातकर्मादिभिः कृतसंस्कारक्रमो वेदाध्ययननिमित्तं श्रुताभिजनाचारसंपन्ने गुरौ प्रतिवसति स्म ।

तस्य श्रुतग्रहणधारणपाटवं च
भक्त्यन्वयश्च सततं[2] स्वकुलप्रसिद्धः ।
पूर्वे वयस्यपि शमाभरणा स्थितिश्च
10 प्रेमप्रसादसुमुखं गुरुमस्य चक्रुः ॥ १ ॥

वशीकरणमन्त्रा हि नित्यमव्याहता गुणाः ।
अपि द्वेषाग्नितप्तानां किं पुनः स्वस्थचेतसाम् ॥ २ ॥

अथ तस्याध्यापकः सर्वेषामेव शिष्याणां शीलपरीक्षानिमित्तं स्वाध्यायविश्रामकालेष्वात्मनो दारिद्र्यदुःखान्यभीक्ष्णमुपवर्णयामास—

15 स्वजनेऽपि निराक्रन्दमुत्सवेऽपि हतानन्दम् ।
धिक्प्रदानकथामन्दं दारिद्र्यमफलच्छन्दम् ॥ ३ ॥

परिभवभवनं श्रमास्पदं
सुखपरिवर्जितमत्यनूर्जितम् ।
व्यसनमिव सदैव शोचनं
20 धनविकलत्वमतीव दारुणम् ॥ ४ ॥

अथ ते तस्य शिष्याः प्रतोदसंचोदिता इव सदश्वा गुरुस्नेहात्समुपजातसंवेगाः संपन्नतरं प्रभूततरं च भैक्षमुपसंहरन्ति स्म । स तानुवाच—अलमनेनात्रभवतां परिश्रमेण । न भैक्षोपहाराः कस्यचिद्दारिद्र्यक्षामतां क्षपयन्ति । अस्मत्परिक्लेशामर्षिभिस्तु भवद्भिरयमेव यत्नो धनाहरणं प्रति युक्तः कर्तुं स्यात् । कुतः ?

25 क्षुधमन्नं जलं तर्षं मन्त्रवाक्सागदा गदान् ।
हन्ति दारिद्र्यदुःखं तु संतत्याराधनं धनम् ॥ ५ ॥

K 78 शिष्या ऊचुः—किं करिष्यामो मन्दभाग्या वयं यदेतावान्नः शक्तिप्रयामः । अपि च ।

भैक्षवद्यदि लभ्येरन्नुपाध्याय धनान्यपि ।
नेदं दारिद्र्यदुखं ते वयमेवं सहेमहि ॥ ६ ॥

---

१ Mss. अनुपा° for अनुप°. २ Mss. om. सततं which K has added.

प्रतिग्रहक्लेशोपायं विप्राणां हि धनार्जनम्।
अप्रदाता जनश्चायमित्यगत्या हता वयम् ॥ ७ ॥

अध्यापक उवाच—सन्त्यन्येऽपि शास्त्रपरिदिष्टा धनार्जनोपायाः। जरानिष्पीतसामर्थ्यास्तु वयमयोग्यरूपास्तत्प्रतिपत्तौ। शिष्या ऊचुः—वयमुपाध्याय जरयानुपहतपराक्रमाः। तद्यदि नस्तेषां शास्त्रविहितानामुपायानां प्रतिपत्तिसहतां मन्यसे, तदुच्यताम्। यावदध्यापनपरिश्रमस्यानृण्यं ते गच्छाम इति। अध्यापक उवाच—तरुणैरपि व्यवसायशिथिलहृदयैर्दुरभिसंभवाः खल्वेवंविधा धनार्जनोपायाः। यदि त्वयमत्रभवतां निर्बन्धः, तच्छ्रूयतां साधुः कतम एको धनोपार्जनक्रमः—

आपद्धर्मः स्तेयमिष्टं द्विजाना-
मापच्चान्त्या निःस्वता नाम लोके।
तस्माद्भोज्यं स्वं परेषामदुष्टैः[1]
सर्वं चैतद्ब्राह्मणानां[2] स्वमेव ॥ ८ ॥

कामं प्रसह्यापि धनानि हर्तुं
शक्तिर्भवेदेव भवद्विधानाम्।
न त्वेष योगः स्वयशो हि रक्ष्यं
शून्येषु तस्माद्व्यवसेयमेव ॥ ९ ॥

इति मुक्तप्रग्रहास्तेन ते छात्राः परममिति तत्तस्य वचनमयुक्तमपि युक्तमिव प्रत्यश्रौषुरन्यत्र बोधिसत्त्वात्।

स हि प्रकृतिभद्रत्वात्तन्नोत्सेहेऽनुमोदितुम्।
कृत्यवत्प्रतिपन्नं तैर्व्याहन्तुं सहसैव तु ॥ १० ॥

व्रीडावनतवदनस्तु बोधिसत्त्वो मृदु विनिश्वस्य तूष्णीमभूत्।

अथ स तेषामध्यापको बोधिसत्त्वमवेक्ष्य तं विधिमनभिनन्दन्तमप्रतिक्रोशन्तं निविष्टगुणसंभावनस्तस्मिन् महासत्त्वे किं नु खल्वयमव्यवसितत्वान्निःस्नेहतया वा मयि स्तेयं न प्रतिपद्यते, उताधर्मसंज्ञयेति समुत्पन्नविमर्शस्तत्स्वभावव्यक्तीकरणार्थं बोधिसत्त्वमुवाच—भो महाब्राह्मण। (K 79)

अमी द्विजा मद्व्यसनासहिष्णवः
समाश्रिता वीरमनुष्यपद्धतिम्।
भवाननुत्साहजडस्तु लभ्यते
न नूनमस्मद्व्यसनेन तप्यते ॥ ११ ॥

---

१ Mss. अदृष्टैः for अदुष्टैः. २ Mss. ब्राह्मण्यं for ब्राह्मणानां.

परिप्रकाशेऽप्यनिगूढविस्तरे
मयात्मदुःखे वचसा विदर्शिते।
कथं नु निःसंभ्रमदीनमानसो
भवानिति स्वस्थवदेव तिष्ठति ॥ १२ ॥

5 अथ बोधिसत्त्वः ससंभ्रमोऽभिवाद्योपाध्यायमुवाच—शान्तं पापम्। न खल्वहं निःस्नेहकठिनहृदयत्वादपरितप्यमानो गुरुदुःखैरेवमवस्थितः, किं त्वसंभवादुपाध्यायप्रदर्शितस्य क्रमस्य। न हि शक्यमदृश्यमानेन क्वचित्पापमाचरितुम्। कुतः? रहोऽनुपपत्तेः।

नास्ति लोके रहो नाम पापं कर्म प्रकुर्वतः।
अदृश्यानि हि पश्यन्ति ननु भूतानि मानुषान् ॥ १३ ॥

10 कृतात्मानश्च मुनयो दिव्योन्मिषितचक्षुषः।
तानपश्यन् रहोमानी बालः पापे प्रवर्तते ॥ १४ ॥

अहं पुनर्न पश्यामि शून्यं क्वचन किंचन।
यत्राप्यन्यं न पश्यामि नन्वशून्यं मयैव तत् ॥ १५ ॥

परेण यच्च दृश्येत दुष्कृतं स्वयमेव वा।
15 सुदृष्टतरमेतत्स्याद्दृश्यते स्वयमेव यत् ॥ १६ ॥

स्वकार्यपर्याकुलमानसत्वा-
त्पश्येन्न वान्यश्चरितं परस्य।
रागार्पितैकाग्रमतिः स्वयं तु
पापं प्रकुर्वन्नियमेन वेत्ति ॥ १७ ॥

20 तदनेन कारणेनाहमेवं व्यवस्थित इति। अथ बोधिसत्त्वः समभिप्रसादितमनसमुपाध्यायमवेत्य पुनरुवाच—

न चात्र मे निश्चयमेति मानसं
धनार्थमेवं प्रतरेद्भवानपि।
अवेत्य को नाम गुणागुणान्तरं
25 गुणोपमर्दं धनमूल्यतां नयेत् ॥ १८ ॥

K 80 स्वाभिप्रायं खलु निवेदयामि—

कपालमादाय विवर्णवाससा
वरं द्विषद्वेश्मसमृद्धिरीक्षिता।

१ Mss. परिक्रोशे for परिप्रकाशे. २ Mss. स्वस्थवदिव for °देव.

व्यतीत्य लज्जां न तु धर्मवैशसे
सुरेन्द्रतार्थेऽप्युपसंहृतं मनः ॥ १९ ॥

अथ तस्योपाध्यायः प्रहर्षविस्मयाक्षिप्तहृदय उत्थायासनात्संपरिष्वज्यैनमुवाच—साधु साधु पुत्रक । साधु साधु महाब्राह्मण । प्रतिरूपमेतत्ते प्रशमालंकृतस्यास्य मेधाविकस्य ।

निमित्तमासाद्य यदेव किंचन 5
स्वधर्ममार्गं विसृजन्ति बालिशाः ।
तपःश्रुतज्ञानधनास्तु साधवो
न यान्ति कृच्छ्रे परमेऽपि विक्रियाम् ॥ २० ॥

त्वया कुलं सममलमभ्यलंकृतं
समुद्यता नभ इव शारदेन्दुना । 10
तवार्थवत्सुचरितविश्रुतं श्रुतं
सुखोदयः सफलतया श्रमश्च मे ॥ २१ ॥

तदेवमात्मलज्जयैव सत्पुरुषा नाचारवेलां लङ्घयन्तीति ह्रीवलेनार्येण भवितव्यम् । एवं ह्रीपरिखासंपन्न आर्यश्रावकोऽकुशलं प्रजहाति कुशलं च भावयतीत्येवमादिषु सूत्रेषूपनेयम् । ह्रीवर्णप्रतिसंयुक्तेषु लोकाधिपतेयेषु चेति ॥ 15

॥ इति ब्राह्मणजातकं द्वादशम् ॥



## १३ उन्मादयन्तीजातकम् ।

तीव्रदुःखातुराणामपि सतां नीचमार्गनिष्प्रणयता भवति स्वधैर्यावष्टम्भात् । तद्यथानुश्रूयते—

सत्यत्यागोपशमप्रज्ञादिभिर्गुणातिशयैर्लोकहितार्थमुद्यच्छमानः किल बोधिसत्त्वः कदा-
5 चिच्छिबीनां राजा बभूव साक्षाद्धर्म इव विनय इव पितेव प्रजानामुपकारप्रवृत्तः ।

दोषप्रवृत्तेर्विनियम्यमानो
निवेश्यमानश्च गुणाभिजात्ये ।
पित्रेव पुत्रः क्षितिपेन तेन
ननन्द लोकद्वितयेऽपि लोकः ॥ १ ॥

10 समप्रभावा स्वजने जने च
धर्मानुगा तस्य हि दण्डनीतिः ।
अधर्म्यमावृत्य[1] जनस्य मार्गं
सोपानमालेव दिवो बभूव ॥ २ ॥

K 81 धर्मान्वयं लोकहितं स पश्यं-
15 स्तदेककार्यो नरलोकपालः ।
सर्वात्मना धर्मपथेऽभिरेमे
तस्योपमर्दं च परैर्न सेहे ॥ ३ ॥

अथ तस्य राज्ञः पौरमुख्यस्य दुहिता श्रीरिव विग्रहवती साक्षाद्रतिरिवाप्सरसामन्यतमेव परया रूपलावण्यसंपदोपेता परमदर्शनीया स्त्रीरत्नसंमता बभूव ।

20 अवीतरागस्य जनस्य याव-
त्सा लोचनप्राप्यवपुर्बभूव ।
तावत्स तद्रूपगुणावबद्धां
न दृष्टिमुत्कम्पयितुं शशाक ॥ ४ ॥

अतश्च तस्या उन्मादयन्तीत्येव बान्धवा नाम चक्रुः ॥

25 अथ तस्याः पिता राज्ञः संविदितं कारयामास—स्त्रीरत्नं ते देव विषये प्रादुर्भूतम् । यतस्तत्प्रतिग्रहं विसर्जनं वा प्रति देवः प्रमाणमिति । अथ स राजा स्त्रीलक्षणविदो ब्राह्मणान् समादिदेश—पश्यन्त्वेनां तत्रभवन्तः किमसावस्मद्योग्या न वेति । अथ तस्याः पिता तान् ब्राह्मणान् स्वभवनमभिनीयोन्मादयन्तीमुवाच—भद्रे स्वयमेव ब्राह्मणान् परिवेषयेति । सा तथेति प्रतिश्रुत्य यथाक्रमं ब्राह्मणान् परिवेषयितुमुपचक्रमे । अथ ते ब्राह्मणाः—

---

1 A अधर्म°; B P अधर्म्म° for अधर्म्य°.

तदाननोद्वीक्षणनिश्चलाक्षा
मनोभुवा संह्रियमाणधैर्याः ।
अनीश्वरा लोचनमानसाना-
मासुर्मदेनेव विलुप्तसंज्ञाः ॥ ५ ॥

यदा च नैव शक्नुवन्ति स्म प्रतिसंख्यानधीरनिभृतमवस्थातुं कुत एव भोक्तुम् । 5
अथैषां चक्षुष्पथादुत्सार्य स्वां दुहितरं स गृहपतिः स्वयमेव ब्राह्मणान् परिवेष्य विसर्जयामास।
अथ तेषां बुद्धिरभवत्—कृत्यारूपमिव खल्विदमतिमनोहरमस्या दारिकाया रूपचातुर्यम् ।
यतो नैनां राजा द्रष्टुमप्यर्हति, कुतः पुनः पत्नीत्वं गमयितुम् । अनया हि रूपशोभया
नियतमस्योन्मादितहृदयस्य धर्मार्थकार्यप्रवृत्तेर्विस्रस्यमानोत्साहस्य राजकार्यकालातिक्रमाः
प्रजानां हितसुखोदयपथमुपपीडयन्तः पराभवाय स्युः । 10

K 82

इयं हि संदर्शनमात्रकेण
कुर्यान्मुनीनामपि सिद्धिविघ्नम् ।
प्रागेव भावार्पितदृष्टिवृष्टे-
र्यूनः क्षितीशस्य सुखे स्थितस्य ॥ ६ ॥

तस्मादिदमत्र प्राप्तकालमिति यथाप्रस्तावमुपेत्य राज्ञे निवेदयामासुः—दृष्टास्माभिर्महाराज 15
सा कन्यका । अस्ति तस्या रूपचातुर्यमात्रकमपलक्षणोपघातनिःश्रीकं तु । यतो नैनां
द्रष्टुमप्यर्हति देवः, किं पुनः पत्नीत्वं गमयितुम् ।

कुलद्वयस्यापि हि निन्दिता स्त्री
यशो विभूतिं च तिरस्करोति ।
निमग्नचन्द्रेव निशा समेघा 20
शोभां विभागं च दिवस्पृथिव्योः ॥ ७ ॥

इति श्रुतार्थः स राजा—अपलक्षणा किलासौ, न च मे कुलानुरूपेति तस्यां विनि-
वृत्ताभिलाषो बभूव । अनर्थितां तु विज्ञाय राज्ञः स गृहपतिस्तां दारिकां तस्यैव राज्ञोऽ-
मात्यायाभिपारगाय प्रायच्छत् ॥

अथ कदाचित्स राजा क्रमागतां कौमुदीं स्वस्मिन् पुरवरे निषक्तशोभां[1] द्रष्टुमुत्सुकमना 25
रथवरगतः सिक्तसंमृष्टरथ्यान्तरापणमुच्छ्रितविचित्रध्वजपताकं समन्ततः पुष्पोपहारशबलभूमि-
भागधवलं प्रवृत्तनृत्तगीतहास्यलास्यवादित्रं पुष्पधूपचूर्णवासमाल्यासवस्नानानुलेपनामोदप्रसृत-
सुरभिगन्धि प्रसारितविविधरुचिरपण्यं तुष्टपुष्टोज्ज्वलतरवेषपौरजानपदसंबाधराजमार्गं पुरवर-
मनुविचरंस्तस्यामात्यस्य भवनसमीपमुपजगाम । अथोन्मादयन्ती—अपलक्षणा किलाहमित्यनेन
राज्ञावधूतेति समुत्पन्नामर्षा राजदर्शनकुतूहलेन नाम संदृश्यमानरूपशोभा विद्युदिव घन- 30

१ Mss. विषक्त° for निषक्त°.

नराधिपं श्रीर्न हि कोशसंपदा
विवर्जितं वेशवधूरिवेक्षते ॥ २९ ॥

बोधिसत्त्व उवाच–

अर्घप्रमाणं यदि नाम कर्तुं
शक्यं भवेद्देव सुभाषितानाम् ।
व्यक्तं न ते वाच्यपथं व्रजेयं
तन्निष्क्रयं[1] राज्यमपि प्रयच्छन् ॥ ३० ॥

श्रुत्वैव यन्नाम मनः प्रसादं
श्रेयोनुरागः स्थिरतां च याति ।
प्रज्ञा विवृद्ध्या वितमस्कतां च
क्रय्यं ननु स्यादपि तत्स्वमांसैः ॥ ३१ ॥

दीपः श्रुतं मोहतमःप्रमाथी
चौराद्यहार्यं परमं धनं च ।
संमोहशत्रुव्यथनाय शस्त्रं
नयोपदेष्टा परमश्च[2] मन्त्री ॥ ३२ ॥

आपद्गतस्याप्यविकारि मित्र-
मपीडनी शोकरुजश्चिकित्सा ।
बलं महद्दोषबलावमर्दि
परं निधानं यशसः श्रियश्च ॥ ३३ ॥

सत्संगमे प्राभृतशीभरस्य
सभासु विद्वज्जनरञ्जनस्य ।
परप्रवादद्युतिभास्करस्य
स्पर्धावतां कीर्तिमदापहस्य ॥ ३४ ॥

प्रसन्ननेत्राननवर्णरागै-
रसंस्कृतैरप्यतिहर्षलब्धैः[3] ।
संराधनव्यग्रकराग्रदेशै-
र्विख्याप्यमानातिशयक्रमस्य ॥ ३५ ॥

विस्पष्टहेत्वर्थनिदर्शनस्य
विचित्रशास्त्रागमपेशलस्य ।
माधुर्यसंस्कारमनोहरत्वा-
दक्लिष्टमाल्यप्रकरोपमस्य ॥ ३६ ॥

---

१ A निःक्रियं; B निःक्रयं; P निक्रयं for निष्क्रयं. २ Mss. परमं च for °मश्च. ३ Mss. असंस्कृतैरप्यप्रतिहर्षलब्धैः for the line.

विनीतदीप्तप्रतिभोज्ज्वलस्य
प्रसह्य कीर्तिप्रतिबोधनस्य ।
वाक्सौष्ठवस्यापि विशेषहेतु-
र्योगात्प्रसन्नार्थगतिः श्रुतश्रीः ॥ ३७ ॥

K 215 5 श्रुत्वा च वैरोधिकदोषमुक्तं
त्रिवर्गमार्गं समुपाश्रयन्ते ।
श्रुतानुसारप्रतिपत्तिसारा-
स्तरन्त्यकृच्छ्रेण च जन्मदुर्गम् ॥ ३८ ॥

गुणैरनेकैरिति विश्रुतानि
10 प्राप्तान्यहं प्राभृतवच्छ्रुतानि ।
शक्तः कथं नाम न पूजयेय-
माज्ञां कथं वा तव लङ्घयेयम् ॥ ३९ ॥

यास्यामि सौदाससमीपमस्मा-
दर्थो न मे राज्यपरिश्रमेण ।
15 निवृत्तसंकेतगुणोपमर्दे
लभ्यश्च यो दोषपथानुवृत्त्या ॥ ४० ॥

अथैनं पिता स्नेहात्समुत्पतितसंभ्रमः सादरमुवाच—तवैव खलु तात हितावेक्षिणा मयैवमभिहितम् । तदलमत्र ते मन्युवशमनुभवितुम् । द्विषन्तस्ते सौदासवशं गमिष्यन्ति । अथापि प्रतिज्ञातं त्वया तत्समीपोपगमनम्, अतः सत्यानुरक्षी तत्संपादयितुमिच्छसि, तदपि ते 20 नाहमनुज्ञास्यामि । अपातकं हि स्वप्राणपरिरक्षानिमित्तं गुरुजनार्थं चानृतमार्गो[१] वेदविहित इति । तत्परिहारश्रमेण तव[२] कोऽर्थः ? अर्थकामाभ्यां च विरोधिदृष्टं धर्मसंश्रयमनयमिति व्यसनमिति च राज्ञां प्रचक्षते नीतिकुशलाः । तदलमनेनास्मन्मनस्तापिना स्वार्थनिरपेक्षेण ते निर्बन्धेन । अथाप्ययशस्यं मार्ष धर्मविरोधि चेति प्रतिज्ञाविसंवादनमनुचितत्वान्न व्यवस्यति ते मतिः, एवमपीदं त्वद्विमोक्षणार्थं[३] समुद्युक्तं सज्जमेव नो हस्त्यश्वरथपत्तिकायं 25 संपन्नमनुरक्तं कृतास्त्रशूरपुरुषमनेकसमरनीराजितं महन्महौघभीमं बलम् । तदनेन परिवृतः समभिगम्यैनं वशमानय, अन्तकवशं वा प्रापय । एवमव्यर्थप्रतिज्ञता संपादिता स्यादात्मरक्षा चेति । बोधिसत्त्व उवाच—नोत्सहे देव अन्यथा प्रतिज्ञातुमन्यथा कर्तुं शोच्येषु वा व्यसनपङ्कनिमग्नेषु नरकाभिमुखेषु सुहृत्सु स्वजन[४]परित्यक्तेष्वनाथेषु च तद्विधेषु प्रहर्तुम् ।

अपि च ।

K 216 30 दुष्करं पुरुषादोऽसावुदारं चाकरोन्मयि ।
मद्वचःप्रत्ययाद्यो मां व्यसृजद्वशमागतम् ॥ ४१ ॥

१ Mss. °मार्गं वेदविदित for °मार्गो वेदविहित. २ Mss. तेन for तव. ३ Mss. तद्वि° for त्वद्वि°. ४ A सजन° corrected to सु° or स्व°; P सुजन°.

लब्धं तत्कारणाच्चेदं मया तात सुभाषितम्।
उपकारी विशेषेण सोऽनुकम्प्यो मया यतः ॥ ४२ ॥

अलं चात्र देवस्य मदत्ययाशङ्कया। का हि तस्य शक्तिरस्ति मामेवमभिगतं विहिंसितुमिति। एवमनुनीय स महात्मा पितरं विनिवारणसोद्यमं च विनिवर्त्य प्रणयिजनमनुरक्तं च बलकायमेकाकी विगतभयदैन्यः सत्यानुरक्षी लोकहितार्थं सौदासमभिविनेष्यंस्तन्निकेतमभिजगाम ॥ 5

दूरादेवावलोक्य सौदासस्तं महासत्त्वमतिविस्मयादभिवृद्धबहुमानप्रसादश्चिराभ्यासविरूढक्रूरतामलिनमतिरपि व्यक्तमिति चिन्तामापेदे—अहहहह।

आश्चर्याणां बताश्चर्यमद्भुतानां तथाद्भुतम्।
सत्यौदार्यं नृपस्येदमतिमानुषदैवतम्[1] ॥ ४३ ॥ 10
मृत्युरौद्रस्वभावं मां विनीतभयसंभ्रमः।
इति स्वयमुपेतोऽयं ही धैर्यं साधु सत्यता ॥ ४४ ॥
स्थाने खल्वस्य विख्यातं सत्यवादितया यशः।
इति प्राणान् स्वराज्यं च सत्यार्थं योऽयमत्यजत् ॥ ४५ ॥

अथ बोधिसत्त्वः समभिगम्यैनं विस्मयबहुमानावर्जितमानसमुवाच— 15

प्राप्तं सुभाषितधनं प्रतिपूजितोऽर्थी
प्रीतिं मनश्च गमितं भवतः प्रभावात्।
प्राप्तस्तदस्म्ययमशान यथेप्सितं मां
यज्ञाय वा मम पशुव्रतमादिश त्वम् ॥ ४६ ॥

सौदास—उवाच— 20

नात्येति कालो मम खादितुं त्वां (K 217)
धूमाकुला तावदियं चितापि[2]।
विधूमपक्वं पिशितं च हृद्यं
शृण्मस्तदेतानि सुभाषितानि ॥ ४७ ॥

बोधिसत्त्व उवाच—कस्तवार्थ इत्थंगतस्य सुभाषितश्रवणेन ? 25

इमामवस्थामुदरस्य हेतोः
प्राप्तोऽसि संत्यक्तघृणः प्रजासु।
इमाश्च धर्मं प्रवदन्ति गाथाः
समेत्यधर्मेण यतो न धर्मः ॥ ४८ ॥
रक्षोविकृतवृत्तस्य संत्यक्तार्यपथस्य[3] ते। 30
नास्ति सत्यं कुतो धर्मः किं श्रुतेन करिष्यसि ॥ ४९ ॥

---

१ Mss. इति for अति°. २ AB चिता मे for चितापि. ३ Mss. and Kern संत्यक्तार्थ°.

अथ सौदासस्तामवसादनाममृष्यमाणः प्रत्युवाच—मा तावद्भोः।

कोऽसौ नृपः कथय यो न समुद्यतास्त्रः
क्रीडावने वनमृगीदयितान्निहन्ति।
तद्वन्निहन्मि मनुजान् यदि वृत्तिहेतो-
5 राधर्मिकः किल ततोऽस्मि न ते मृगघ्नाः॥ ५०॥

बोधिसत्त्व उवाच—

धर्मे स्थिता न खलु तेऽपि नमन्ति येषां
भीतद्रुतेष्वपि मृगेषु शरासनानि।
तेभ्योऽपि निन्द्यतम एव नराशनस्तु
10 जात्युच्छ्रिता हि पुरुषा न च भक्षणीयाः॥ ५१॥

अथ सौदासः परिकर्कशाक्षरमप्यभिधीयमानो बोधिसत्त्वेन तन्मैत्रीगुणप्रभावादभिभूतरौद्रस्वभावः सुखायमान एव तद्वचनमभिप्रहसन्नुवाच—भोः सुतसोम।

मुक्तो मया नाम समेत्य गेहं
समन्ततो राज्यविभूतिरम्यम्।
15 यन्मत्समीपं पुनरागतस्त्वं
न नीतिमार्गे कुशलोऽसि तस्मात्॥ ५२॥

बोधिसत्त्व उवाच—नैतदस्ति। अहमेव तु कुशलो नीतिमार्गे यदेनं न प्रतिपत्तुमिच्छामि।

K 218 यं नाम प्रतिपन्नस्य धर्मादैकान्तिकी च्युतिः।
20 न तु प्रसिद्धिः सौख्यस्य तत्र किं नाम कौशलम्॥ ५३॥

किं च भूयः।

ये नीतिमार्गप्रतिपत्तिधीराः
प्रायेण ते प्रेत्य पतन्त्यपायान्।
अपास्य जिह्मानिति नीतिमार्गान्
25 सत्यानुरक्षी पुनरागतोऽस्मि॥ ५४॥

अतश्च नीतौ कुशलोऽहमेव
त्यक्त्वानृतं योऽभिरतोऽस्मि सत्ये।
न तत्सुनीतं हि वदन्ति तज्ज्ञा
यन्नानुबध्नन्ति यशःसुखार्थाः॥ ५५॥

30 सौदास उवाच—

प्राणान् प्रियान् स्वजनमश्रुमुखं च हित्वा
राज्याश्रयाणि च सुखानि मनोहराणि।

कामर्थसिद्धिमनुपश्यसि सत्यवाक्ये
तद्रक्षणार्थमपि मां यदुपागतोऽसि ॥ ५६ ॥

बोधिसत्त्व उवाच—बहवः सत्यवचनाश्रया गुणा[1]तिशयाः । संक्षे[2]पस्तु श्रूयताम्—

माल्यश्रियं ह्यद्यतयातिशेते
सर्वान् रसान् स्वादुतया च सत्यम् ।
श्रमादृते पुण्यगुणप्रसिद्ध्या
तपांसि तीर्थाभिगमश्रमांश्च ॥ ५७ ॥

कीर्तेर्जगद्व्याप्तिकृतक्षणाया
मार्गस्त्रिलोकाक्रमणाय सत्यम् ।
द्वारं प्रवेशाय सुरालयस्य
संसारदुर्गोत्तरणाय सेतुः ॥ ५८ ॥

अथ सौदासः साधु युक्तमित्यभिप्रणम्यैनं सविस्मयमभिवीक्षमाणः पुनरुवाच—

अन्ये नरा मद्वशगा भवन्ति
दैन्यार्पणात्रासविलुप्तधैर्याः ।
संत्यज्यसे त्वं तु न धैर्यलक्ष्म्या
मन्ये न ते मृत्युभयं नरेन्द्र ॥ ५९ ॥

बोधिसत्त्व उवाच—

महतापि प्रयत्नेन यच्छक्यं नातिवर्तितुम् ।
[3]प्रतीकारासमर्थेन भयक्लैब्येन तत्र किम् ॥ ६० ॥

इति परिगणितलोकस्थितयोऽपि तु का[4]पुरुषाः

पापप्रसङ्गादनुतप्यमानाः
शुभेषु कर्मस्वकृतश्रमाश्च ।
आशङ्कमानाः परलोकदुःखं
मर्तव्यसंत्रासजडा भवन्ति ॥ ६१ ॥

तदेव कर्तुं न तु संस्मरामि
भवेद्यतो मे मनसोऽनुतापः ।
सात्मीकृतं कर्म च शुक्लमस्मा-
द्धर्मस्थितः को मरणाद्बिभीयात् ॥ ६२ ॥

न च स्मराम्यर्थिजनोपयानं
यन्न प्रहर्षाय ममार्थिनां वा ।

१ AB गुणातिश्रयाः. २ AB संक्षेपतस्तु. ३ B प्रतिकारा°. ४ B पुरुषाः for कापु°.

इति प्रदानैः समवाप्ततुष्टि-
धर्मे स्थितः को मरणाद्विभीयात् ॥ ६३ ॥
चिरं विचिन्त्यापि[1] च नैव पापे
मनःपदन्यासमपि स्मरामि।
5 विशोधितस्वर्गपथोऽहमेवं
मृत्योः किमर्थं भयमभ्युपेयाम् ॥ ६४ ॥
विप्रेषु बन्धुषु सुहृत्सु समाश्रितेषु
दीने जने यतिषु चाश्रमभूषणेषु।
न्यस्तं मया बहु धनं ददता यथार्हं
10 कृत्यं च यस्य यदभूत्तदकारि तस्य ॥ ६५ ॥
श्रीमन्ति कीर्तनशतानि निवेशितानि
सत्राजिराश्रमपदानि सभाः प्रपाश्च।
मृत्योर्न मे भयमतस्तदवाप्ततुष्टे-
र्यज्ञाय तत्समुपकल्पय भुङ्क्ष्व वा माम् ॥ ६६ ॥

15 तदुपश्रुत्य सौदासः प्रसादाश्रुव्याप्तनयनः समुद्भिद्यमानरोमाञ्चपिटको विस्मृतपापस्वभावतामिस्रः सबहुमानमवेक्ष्य बोधिसत्त्वमुवाच—शान्तं पापम्।

अद्याद्विषं स खलु हालहलं प्रजान-
न्नाशीविषं प्रकुपितं ज्वलदायसं वा।
मूर्धापि तस्य शतधा हृदयं च याया-
20 द्यस्त्वद्विधस्य[2] नृपपुंगव पापमिच्छेत् ॥ ६७ ॥

K 220 तदर्हति भवांस्तान्यपि मे सुभाषितानि वक्तुम्। अनेन हि ते वचनकुसुमवर्षेणाभिप्रसादितमनसः सुष्ठुतरमभिवृद्धं[3] च तेषु मे कौतूहलम्। अपि च भोः।

दृष्ट्वा मे चरितच्छायावैरूप्यं धर्मदर्पणे।
अपि नामागतावेगं[4] स्यान्मे धर्मोत्सुकं मनः ॥ ६८ ॥

25 अथैनं बोधिसत्त्वः पात्रीकृताशयं धर्मश्रवणप्रवणमानसमवेत्योवाच—तेन हि धर्मार्थिना तदनुरूपसमुदाचारसौष्ठवेन धर्मः[5] श्रोतुं युक्तम्। पश्य।

नीचैस्तरासनस्थानाद्विबोध्य विनयश्रियम्।
प्रीत्यर्पिताभ्यां चक्षुर्भ्यां वाङ्मध्वास्वादयन्निव ॥ ६९ ॥
गौरवावर्जितैकाग्रप्रसन्नामलमानसः।
सत्कृत्य धर्मं शृणुयाद्भिषग्वाक्यमिवातुरः ॥ ७० ॥
30

---

१ AP विचिन्त्याविधि; B विचिन्त्याधि च for विचिन्त्यापि च. २ AB त्वद्विधे for त्वद्विधस्य. ३ Mss. अतिवृद्धं for अभि°. ४ Mss. °गतवेगं for °गतावेगं. ५ A धर्मं for धर्मः.

अथ सौदासः स्वेनोत्तरीयेण समास्तीर्योच्चैस्तरं शिलातलं तत्र चाधिरोप्य बोधिसत्त्वं स्वयमनास्तरितायामुपविश्य भूमौ बोधिसत्त्वस्य पुरस्तादाननोद्वीक्षणव्यापृतनिरीक्षणरतं महासत्त्वमुवाच—ब्रूहीदानीं मार्षेति । अथ बोधिसत्त्वो नवाम्भोधरनिनदमधुरेण [1]गम्भीरेणापूरयन्निव तद्वनं व्यापिना स्वरेणोवाच—

यदृच्छयाप्यु[2]पनीतं सकृत्सज्जनसंगतम् । 5
भवत्यचलमत्यन्तं नाभ्यासक्रममीक्ष[3]ते ॥ ७१ ॥

तदुपश्रुत्य सौदासः साधु साध्विति स्वशिरः प्रकम्प्याङ्गुलीविक्षेपं बोधिसत्त्वमुवाच—ततस्ततः ?

अथ बोधिसत्त्वो द्वितीयां गाथामुदाजहार—

न सज्जनाद्दूरचरः क्वचिद्भवे- 10
द्भजेत साधून् विनयक्रमानुगः ।
स्पृशन्त्ययत्नेन हि [4]तत्समीपगं
विसर्पिणस्तद्गुणपुष्परेणवः ॥ ७२ ॥

सौदास उवाच— K 221

सुभाषितान्यर्चयता साधो सर्वात्मना त्वया । 15
स्थाने खलु नियुक्तोऽर्थः स्थाने नावेक्षितः श्रमः ॥ ७३ ॥

ततस्ततः ? बोधिसत्त्व उवाच—

र[5]थौ नृ[6]पाणां मणिहेमभूषणा
व्रजन्ति देहाश्च जराविरूपताम् ।
सतां तु धर्मं न जराभिवर्तते 20
स्थिरानुरागा हि गुणेषु साधवः ॥ ७४ ॥

अमृतवर्षं खल्विदम् । अहो संतर्पिताः स्मः । ततस्ततः ? बोधिसत्त्व उवाच—

नभश्च दूरे वसुधातलाच्च
पारादवारं च महार्णवस्य ।
अस्ताचलेन्द्रादुदयस्ततोऽपि 25
धर्मः सतां दूरतरेऽसतां च ॥ ७५ ॥

अथ सौदासः प्रसादविस्मयाभ्यामावर्जितप्रेमबहुमानो बोधिसत्त्वमुवाच—

चित्राभिधानातिशयोज्ज्वलार्था
गाथास्त्वदेता मधुरा निशम्य ।

---

१ A P om. गम्भीरेण. २ Mss. उपनीतं. ३ Mss. ईक्ष्यते. ४ Mss. om. तत. ५ A. यथा for रथा. ६ A. नराणां corr. to नृपाणां.

आनन्दितस्तत्प्रतिपूजनार्थं
वरानहं ते चतुरो ददामि ॥ ७६ ॥

तद्वृणीष्व यद्यन्मत्तोऽभिकाङ्क्षसीति ॥

अथैनं बोधिसत्त्वः सविस्मयबहुमान उवाच—कस्त्वं वरप्रदानस्य ?

5 यस्यास्ति नात्मन्यपि ते[1] प्रभुत्व-
मकार्यसंरागपराजितस्य ।
स त्वं वरं दास्यसि कं परस्मै
शुभप्रवृत्तेरपवृत्तभावः ॥ ७७ ॥
अहं च देहीति वरं वदेयं
10 मनश्च दित्साशिथिलं तव स्यात् ।
तमत्ययं कः सघृणोऽभ्युपेया-
देतावदेवालमलं यतो नः ॥ ७८ ॥

अथ सौदासः किंचिद्व्रीडावनतवदनो बोधिसत्त्वमुवाच—अलमत्रभवतो मामेवं विशङ्कितुम् ।

15 प्राणानपि परित्यज्य दास्याम्येतानहं[2] वरान् ।
विस्रब्धं तद्वृणीष्व त्वं यद्यदिच्छसि भूमिप ॥ ७९ ॥

बोधिसत्त्व उवाच—तेन[3] हि

K 222 सत्यव्रतो भव विसर्जय सत्त्वहिंसां
बन्दीकृतं जनमशेषमिमं विमुञ्च ।
20 अद्या न चैव नरवीर मनुष्यमांस-
मेतान् वराननवरांश्चतुरः प्रयच्छ ॥ ८० ॥

सौदास उवाच—

ददामि पूर्वान् भवते वरांस्त्री-
नन्यं चतुर्थं तु वरं वृणीष्व ।
25 अवैषि किं न त्वमिदं यथाह-
मीशो विरन्तुं न मनुष्यमांसात् ॥ ८१ ॥

बोधिसत्त्व उवाच—हन्त तवैतत्संवृत्तम् । ननूक्तं मया कस्त्वं वरप्रदानस्येति[4] ? अपि च भोः ।

सत्यव्रतत्वं च कथं स्यादहिंसकता च ते ।
30 अपरित्यजतो राजन् मनुष्यपिशिताशिताम् ॥ ८२ ॥

---

१ Mss. om. ते. २ Mss. and Kern दास्यामि तान्. ३ AP तत्तर्हि for तेन हि. ४ Mss. om. वर°.

आह[1]–

ननूक्तं भवता पूर्वं दास्याम्येतानहं वरान्।
प्राणानपि परित्यज्य तदिदं जायतेऽन्यथा ॥ ८३ ॥

अहिंसकत्वं च कुतो मांसार्थं ते घ्नतो नरान्।
सत्येवं कतमे दत्ता भवता स्युर्वरास्त्रयः ॥ ८४ ॥ 5

सौदास उवाच–

त्यक्त्वा राज्यं वने क्लेशो यस्य हेतोर्धृतो[2] मया।
हतो धर्मः क्षता कीर्तिस्त्यक्ष्यामि तदहं कथम् ॥ ८५ ॥

बोधिसत्त्व उवाच–अत एव तद्भवांस्त्यक्तुमर्हति।

धर्मादर्थात्सुखात्कीर्तेर्भ्रष्टो यस्य कृते भवान्। 10
अनर्थायतनं तादृक्कथं न त्यक्तुमर्हसि ॥ ८६ ॥

दत्तानुशयिता चेयमनौदार्यहते जने।
नीचता[3] सा कथं नाम त्वामप्यभिभवेदिति ॥ ८७ ॥

तदलं ते पाप्मानमेवानुभ्रमितुम्। अवबोद्धुमर्हस्यात्मानम्। सौदासः खल्वत्रभवान्।

वैद्येक्षितानि कुशलैरुपकल्पितानि 15 K 223
ग्राम्याण्यनूपजलजान्यथ जाङ्गलानि।
मांसानि सन्ति कुरु तैर्हृदयस्य तुष्टिं
निन्दावहाद्विरम साधु मनुष्यमांसात् ॥ ८८ ॥

तूर्यस्वनान् सजलतोयदनादधीरान्
गीतस्वनं च निशि राज्यसुखं च तत्तत्। 20
बन्धून् सुतान् परिजनं च मनोनुकूलं
हित्वा कथं नु रमसेऽत्र वने विविक्ते ॥ ८९ ॥

चित्तस्य नार्हसि नरेन्द्र वशेन गन्तुं
धर्मार्थयोरनुपरोधपथं भजस्व।
एको नृपान् युधि विजित्य समस्तसैन्यान् 25
मा चित्तविग्रहविधौ परिकातरो भूः ॥ ९० ॥

लोकः परोऽपि मनुजाधिप नन्ववेक्ष्य-
स्तस्मात्प्रियं यदहितं च न तन्निषेव्यम्।
यत्स्यात्तु कीर्त्यनुपरोधि मनोज्ञमार्गं
तद्विप्रियं सदपि भेषजवद्भजस्व ॥ ९१ ॥ 30

---

१ Kern takes आह = आः. २ Mss. वृतो. ३ Mss. निरता for नीचता.

अथ सौदासः प्रसादाश्रुव्याप्तनयनो गद्गदार्[1]यमानकण्ठः समभिसृत्यैव बोधिसत्त्वं पादयोः संपरिष्वज्योवाच—

गुणकुसुमरजोभिः पुण्यगन्धैः समन्ता-
ज्जगदिदमवकीर्णं कारणे त्वद्यशोभिः।
5 इति विचरति पापे मृत्युदूतोग्रवृत्तौ
त्वमिव हि क इवान्यः सानुकम्पो मयि स्यात्॥ ९२॥

शास्ता गुरुश्च मम दैवतमेव च त्वं
मूर्ध्ना वचांस्यहममूनि तवार्चयामि।
K 224 भोक्ष्ये न चैव सुतसोम मनुष्यमांसं
10 यन्मां यथा वदसि तच्च तथा करिष्ये॥ ९३॥

नृपात्मजा यज्ञनिमित्तमाहृता
मया च ये बन्धनखेदपीडिताः।
हतत्विषः शोकपरीतमानसा-
स्तदेहि मुञ्चाव सहैव तानपि॥ ९४॥

15 अथ बोधिसत्त्वस्तथेत्यस्मै प्रतिश्रुत्य यत्र ते नृपसुतास्तेनावरुद्धास्तत्रैवाभिजगाम। दृष्ट्वैव च ते नृपसुताः सुतसोमं हन्त मुक्ता वयमिति परं हर्षमुपजग्मुः।

विरेजिरे ते सुतसोमदर्शना-
न्नरेन्द्रपुत्राः स्फुटहासकान्तयः।
शरन्मुखे चन्द्रकरोपबृंहिता
20 विजृम्भमाणाः कुमुदाकरा इव॥ ९५॥

अथैनानभिगम्य बोधिसत्त्वः समाश्वासयन् प्रियवचनपुरःसरं च प्रतिसंमोद्य सौदासस्याद्रोहाय शपथं कारयित्वा बन्धनाद्विमुच्य सार्धं सौदासेन तैश्च नृपतिपुत्रैरनुगम्यमानः स्वं राज्यमुपेत्य यथार्हकृतसंस्कारांस्तान् राजपुत्रान् सौदासं च स्वेषु स्वेषु राज्येषु प्रतिष्ठापयामास॥

तदेवं श्रेयः समाधत्ते यथातथाप्युपनतः सत्संगम इति श्रेयोर्थिना सज्जनसमाश्रयेण 25 भवितव्यम्। एवमसंस्तुतसुहृत्पूर्वजन्मस्वप्युपकारपरत्वाद्बुद्धो भगवानिति तथागतवर्णेऽपि वाच्यम्। एवं सद्धर्मश्रवणं दोषापचयाय गुणसमाधानाय च भवतीति सद्धर्मश्रवणेऽपि वाच्यम्। श्रुतप्रशंसायामपि वाच्यम्—एवमनेकानुशंसं श्रुतमिति। सत्यकथायामपि वाच्यम्—एवं सज्जनेष्टं पुण्यकीर्त्याकरं सत्यवचनमित्येवं स्वप्राणसुखैश्वर्यनिरपेक्षाः सत्यमनुरक्षन्ति सत्पुरुषा इति। सत्यप्रशंसायामप्युपनेयं करुणावर्णेऽपि चेति॥

30 ॥ इति सुतसोमजातकमेकत्रिंशत्तमम्॥



[1] Mss. गर्गरायमान°.

## ३२ अयोगृहजातकम् ।

राजलक्ष्मीरपि श्रेयोमार्गं नावृणोति संविग्नमानसानामिति संवेगपरिचयः कार्यः । तद्यथानुश्रूयते—

बोधिसत्त्वभूतः किलायं भगवान् व्याधिजरामरणप्रियविप्रयोगादिव्यसनशतोपनिपातं दुःखितमनाथमत्राणमपरिणायकं लोकमवेक्ष्य करुणया समुत्साह्यमानस्तत्परित्राणव्यवसितमतिरतिसाधुस्वभावस्तत्तत्संपादयमानो विमुखस्यासंस्तुतस्यापि च लोकस्य हितं सुखविशेषं च कदाचिदन्यतमस्मिन् राजकुले प्रजानुरागसौमुख्यादस्खलिताभिवृद्ध्या च समृद्ध्या समानतद्दृप्तसामन्तया चाभिव्यज्यमानमहाभाग्ये विनयश्लाघिनि जन्म प्रतिलेभे । स जायमान एव तद्राजकुलं तत्समानसुखदुःखं च पुरवरं परयाभ्युदयश्रिया संयोजयामास ।

K 225 5

प्रतिग्रहव्याकुलतुष्टविप्रं
मदोद्धताभ्युज्ज्वलवेषभृत्यम्[1] ।
अनेकतूर्यस्वनपूर्णकूज-
मानन्दनृत्तानयवृत्तभावम् ॥ १ ॥ 10

संसक्तगीतद्रवहासनादं
परस्पराश्लेषविवृद्धहर्षम्[2] । 15
नरैः प्रियाख्यानकदानतुष्टै-[3]
राशास्यमानाभ्युदयं नृपस्य ॥ २ ॥

विघट्टितद्वारविमुक्तबन्धनं
समुच्छ्रिताग्रध्वजचित्रचत्वरम् ।
विचूर्णपुष्पासवसिक्तभूतलं 20
बभार रम्यां पुरमुत्सवश्रियम् ॥ ३ ॥

महागृहेभ्यः प्रविकीर्यमाणै-
र्हिरण्यवस्त्राभरणादिवर्षैः ।
लोकं तदा व्याप्तुमिवोद्यता श्री-
रुन्मत्तगङ्गाललितं चकार ॥ ४ ॥ 25

तेन च समयेन तस्य राज्ञो जाता जाताः कुमारा म्रियन्ते स्म । स तं विधिममानुषकृतमिति मन्यमानस्तस्य तनयस्य रक्षार्थं मणिकाञ्चनरजतभक्तिचित्रे श्रीमति सर्वायसे प्रसूतिभवने भूतविद्यापरिदृष्टेन वेदविहितेन च क्रमेण विहितरक्षोघ्नप्रतीकारे समुचितैश्च कौतुकमङ्गलैः कृतस्वस्त्ययनपरिग्रहे जातकर्मादिसंस्कारविधिं संवर्धनं च कारयामास ।

---

१ Mss. °वेश° for °वेष°. २ Mss. and Kern °विवृत्त°. ३ A प्रियाख्यान्विक°.

तमपि च महासत्त्वं सत्त्वसंपत्तेः पुण्योपचयप्रभा[1]वात्सुसंविहितत्वाच्च रक्षाया नामानुषाः प्रसेहिरे। स कालक्रमादवाप्तसंस्कारकर्मा श्रुताभिजनाचारमहद्भ्यो लब्धविद्वद्यशःसंमाननेभ्यः प्रशमविनयमेधागुणावर्जितेभ्यो गुरुभ्यः समधिगतानेकविद्यः प्रत्यहमापूर्यमाणमूर्तिर्यौवनकान्त्या K 226 निसर्गसिद्धेन च विनयानुरागेण परं प्रेमास्पदं स्वजनस्य जनस्य च बभूव।

5 असंस्तुतमसंबन्धं दूरस्थमपि सज्जनम्।
जनोऽन्वेति सुहृत्प्रीत्या गुणश्रीस्तत्र कारणम्॥ ५॥
हासभूतेन नभसः शरद्विकचरश्मिना।
संबन्धसिद्धिर्लोकस्य का हि चन्द्रमसा सह॥ ६॥

अथ स महासत्त्वः पुण्यप्रभावसुखोपनतैर्दिव्यकल्पैरनल्पैरपि च विषयैरुपलाल्यमानः 10 स्नेहबहुमानसुमुखेन च पित्रा विश्वासनिर्विशङ्कं दृश्यमानः कदाचित्स्वस्मिन् पुरवरे प्रविततरमणीयशोभां कालक्रमोपनतां कौमु[2]दीविभूतिं दिदृक्षुः कृताभ्यनुज्ञः पित्रा काञ्चनमणिरजतभक्तिचित्रालंकारं समुच्छ्रितनानाविधरागप्रचलितोज्ज्वलपताकध्वजं हैमभाण्डाभ्यलंकृतविनीतचतुरतुरंगं दक्षदाक्षिण्यनिपुणशुचिविनीतधीरसार[3]थिं चित्रोज्ज्वलवेषप्रहरणावरणानुयात्रं रथवरमधिरुह्य मनोज्ञतूर्यस्वनपुरःसरस्तत्पुरवरमनुविचरंस्तद्दर्शनाक्षिप्तहृदयस्य कौतूहल-15 लोलचक्षुषः स्तुतिसभाजनाञ्जलिप्रग्रहप्रणामाशीर्वचनप्रयोगसव्यापारस्योत्सवरम्यतरवेषरचनस्य पौरजानपदस्य समुदयशोभामालोक्य लब्धप्रहर्षावकाशोऽपि मनसि कृतसंवेगपरिचयत्वात्पूर्वजन्मसु स्मृतिं प्रतिलेभे।

कृपणा बत लोकस्य चले[4]त्वविरसा स्थितिः।
यदियं कौमुदीलक्ष्मीः स्मर्तव्यैव भविष्यति॥ ७॥
20 एवंविधायां च जगत्प्रवृत्ता-
वहो यथा निर्भयता जनानाम्।
यन्मृत्युनाधिष्ठितसर्वमार्गा
निःसंभ्रमा हर्षमनुभ्रमन्ति॥ ८॥
अवार्यवीर्येष्वरिषु स्थितेषु
25 जिघांसया व्याधिजरान्तकेषु।
अवश्यगम्ये परलोकदुर्गे
हर्षावकाशोऽत्र सचेतसः कः॥ ९॥
K 227 स्वनानुकृत्येव महार्णवानां
संरम्भरौद्राणि जलानि कृत्वा।
30 मेघास्तडिद्भासुरहेममालाः
संभूय भूयो विलयं व्रजन्ति॥ १०॥

---

१ Mss. °प्रभवात् for °प्रभावात्. २ Mss. कौमुदीं. ३ Mss. °सारधिं. ४ A चरत्वविरसा

तटैः समं तद्विनिबद्धमूलान्[1]
हृत्वा तरूँल्लब्धजवैः पयोभिः ।
भवन्ति भूयः सरितः क्रमेण
शोकोपतापादिव दीनरूपाः ॥ ११ ॥

हृत्वापि शृङ्गाणि महीधराणां
वेगेन वृन्दानि च तोयदानाम् ।
विघूर्ण्य चोद्वर्त्य च सागराम्भः
प्रयाति नाशं पवनप्रभावः ॥ १२ ॥

दीप्तोद्धतार्चिर्विकसत्स्फुलिङ्गः
संक्षिप्य कक्षं क्षयमेति वह्निः ।
क्रमेण शोभाश्च वनान्तराणा-
मुद्यन्ति भूयश्च तिरोभवन्ति ॥ १३ ॥

कः संप्रयोगो न वियोगनिष्ठः
काः संपदो या न विपत्परैति ।
जगत्प्रवृत्ताविति चञ्चलाया-
मप्रत्यवेक्ष्यैव जनस्य हर्षः ॥ १४ ॥

इति स परिगणयन् महात्मा संवेगाद्व्यावृत्तप्रमोदोद्धवेन मनसा रमणीयेष्वपि पुरवरविभूषार्थमभिप्रसारिषु लोकचित्रेष्वविषज्यमानबुद्धिः[2] क्रमेण स्वभवनमनुप्राप्तमेवात्मानमपश्यत्। तदभिवृद्धसंवेगश्च विषयसुखेष्वनास्थो धर्म एकः शरणमिति तत्प्रतिपत्तिनिश्चितमतिर्यथा[3]-प्रस्तावमभिगम्य राजानं कृताञ्जलिस्तपोवनगमनायानुज्ञामयाचत-

प्रव्रज्यासंश्रयात्कर्तुमिच्छामि हितमात्मनः ।
कृतां तत्राभ्यनुज्ञां च त्वयानुग्रहपद्धतिम् ॥ १५ ॥

तच्छ्रुत्वा प्रियतनयः स तस्य राजा
दिग्धेन द्विरद इवेषुणाभिविद्धः ।
गम्भीरोऽप्युदधिरिवानिलावधूत-
स्तच्छोकव्यथितमनाः समाचकम्पे ॥ १६ ॥

निवारयिष्यन्नथ तं स राजा
स्नेहात्परिष्वज्य सबाष्पकण्ठः ।
उवाच कस्मात्सहसैव तात
संत्यक्तुमस्मान् मतिमित्यकार्षीः ॥ १७ ॥

---

१ Mss. समन्ताद्विनि°. २ Mss. अविषह्यमान°. ३ Mss. °मतिरित्ययथा°.

K 228

त्वदप्रियेणात्मविनाशहेतुः
केनायमित्याकलितः कृतान्तः।
शोकाश्रुपर्याकुललोचनानि
भवन्तु कस्य स्वजनाननानि ॥ १८ ॥

5 अथापि किंचित्परिशङ्कितं वा
मयि व्यलीकं समुपश्रुतं वा।
तद्ब्रूहि यावद्विरमामि तस्मा-
त्पश्यामि न त्वात्मनि किंचिदीदृक् ॥ १९ ॥

बोधिसत्त्व उवाच—

10 इत्यभिस्नेहसुमुखे व्यलीकं नाम किं त्वयि।
विप्रियेण समर्थः स्यान्मामासादयितुं च कः ॥ २० ॥

अथ किं तर्हि नः परित्यक्तुमिच्छसीति चाभिहितः साश्रुनयनेन राज्ञा स महासत्त्व-स्तमुवाच—मृत्युभयात्। पश्यतु देवः।

यामेव रात्रिं प्रथमामुपैति
15 गर्भे निवासं नरवीर लोकः।
ततःप्रभृत्यस्खलितप्रयाणः
स प्रत्यहं मृत्युसमीपमेति ॥ २१ ॥

नीतौ सुयुक्तोऽपि बले स्थितोऽपि
नात्येति कश्चिन्मरणं जरां वा।
20 उपद्रुतं सर्वमितीदमाभ्यां
धर्मार्थमस्माद्वनमाश्रयिष्ये ॥ २२ ॥

व्यूढान्युदीर्णनरवाजिरथद्विपानि
सैन्यानि[1] दर्परभसाः क्षितिपा जयन्ति।
जेतुं कृतान्तरिपुमेकमपि त्वशक्ता[2]-
25 स्तन्मे मतिर्भवति धर्ममभिप्रपत्तुम् ॥ २३ ॥

दृप्ता[3]श्वकुञ्जरपदातिरथैरनीकै-
र्गुप्ता विमोक्षमुपयान्ति नृपा द्विषद्भ्यः।
सार्धं बलैरतिबलस्य तु मृत्युशत्रो-
र्मन्वादयोऽपि विवशा वशमभ्युपेताः ॥ २४ ॥

---

१ Mss. सैन्यदर्प° for सैन्यानि दर्प°. २ B ह्यसक्ताः for त्वशक्ताः. ३ AB दृष्टा°; P उद्गा° for दृप्ता°.

संचूर्ण्य दन्तमुसलैः[1] पुरगोपुराणि
　　मत्ता द्विपा युधि रथांश्च नरान् द्विपांश्च ।
नैवान्तकं प्रतिमुखाभिगतं नुदन्ति
　　वप्रान्तलब्धविजयैरपि तैर्विषाणैः ॥ २५ ॥
दृढचित्रवर्म[2]कवचावरणान्　　K 229
　　युधि दारयन्त्यपि विदूरचरान् ।
इषुभिस्तदस्त्रकुशला द्विषत-
　　श्चिरवैरिणं न तु कृतान्तमरिम्[3] ॥ २६ ॥
सिंहा विकर्तनकरैर्नखरैर्द्विपानां
　　कुम्भाग्रमग्नशिखरैः प्रशमय्य तेजः ।
भित्त्वैव च श्रुतमनांसि रवैः परेषां
　　मृत्युं समेत्य हतदर्पबलाः स्वपन्ति ॥ २७ ॥
दोषानुरूपं प्रणयन्ति दण्डं
　　कृतापराधेषु नृपाः परेषु ।
महापराधे यदि मृत्युशत्रौ
　　न दण्डनीतिप्रवणा भवन्ति ॥ २८ ॥
नृपाश्च सामादिभिरप्युपायैः[4]
　　कृतापराधं वशमानयन्ति ।
रौद्रश्चिराभ्यासदृढावलेपो
　　मृत्युः पुनर्नानुनयादिसाध्यः ॥ २९ ॥
क्रोधानलज्वलितघोरविषाग्निगर्भै-
　　र्दंष्ट्राङ्कुरैरभिदशन्ति नरान् भुजंगाः ।
दंष्ट्रैर्व्यय[5]त्नविधुरास्तु भवन्ति मृत्यौ
　　वध्येऽपि नित्यमपकारविधानदक्षे ॥ ३० ॥
दष्टस्य कोपरभसैरपि पन्नगैश्च
　　मन्त्रैर्विषं प्रशमयन्त्यगदैश्च वैद्याः ।
आशीविषस्त्वतिविषोऽयमरिष्टदंष्ट्रो
　　मन्त्रागदादिभिरसाध्यबलः कृतान्तः ॥ ३१ ॥
पक्षानिलैर्ललितमीनकुलं व्युदस्य
　　मेघौघभीमरसितं जलमर्णवेभ्यः ।

---

१ Mss. °मुशलैः.　२ AB °चर्म°; P °धर्म° for °वर्म°.　३ Mss. कृतान्तरिमु.
४ Kern suggests अभ्युपायैः.　५ A दष्टव्य°; B दंष्ट्रव्य°; P द्रंष्टव्य° for दंष्टव्य°.

सर्पान् हरन्ति विततग्रहणाः सुपर्णा[1]
मृत्युं पुनः प्रमथितुं न तथोत्सहन्ते ॥ ३२ ॥
भीतद्रुतानपि जवातिशयेन जित्वा
संसाद्य चैकभुजवज्रविलासवृत्त्या[2] ।
K 230 5 व्याघ्राः पिबन्ति रुधिराणि वने मृगाणां
नैवंप्रवृत्तिपटवस्तु भवन्ति मृत्यौ ॥ ३३ ॥
दंष्ट्राकरालमपि नाम मृगः समेत्य
वैयाघ्रमाननमुपैति पुनर्विमोक्षम् ।
मृत्योर्मुखं तु पृथुरोगजरार्तिदंष्ट्रं
10 प्राप्तस्य कस्य च पुनः शिवतातिरस्ति ॥ ३४ ॥
पिबन्ति नृणां विकृतोग्रविग्रहा
सहौजसायूंषि दृढग्रहा ग्रहाः ।
भवन्ति तु प्रस्तुतमृत्युविग्रहा
विपन्नदर्पोत्कटतापरिग्रहाः ॥ ३५ ॥
15 पूजारतद्रोहकृतेऽभ्युपेतान्[3][4]
ग्रहान्नियच्छन्ति च सिद्धविद्याः ।
तपोबलस्वस्त्ययनौषधैश्च
मृत्युग्रहस्त्वप्रतिवार्य एव ॥ ३६ ॥
मायाविधिज्ञाश्च महासमाजे
20 जनस्य चक्षूंषि विमोहयन्ति ।
कोऽपि प्रभावस्त्वयमन्तकस्य
यद्भ्राम्यते तैरपि नास्य चक्षुः ॥ ३७ ॥
हत्वा विषाणि च तपोबलसिद्धमन्त्रा
व्याधीन्नृणामुपशमय्य च वैद्यवर्याः ।
25 धन्वन्तरिप्रभृतयोऽपि गता विनाशं
धर्माय मे नमति तेन मतिर्वनान्ते ॥ ३८ ॥
आविर्भवन्ति च पुनश्च तिरोभवन्ति
गच्छन्ति वानिलपथेन महीं विशन्ति ।
विद्याधरा विविधमन्त्रबलप्रभावा
30 मृत्युं समेत्य तु भवन्ति हतप्रभावाः ॥ ३९ ॥

---

१ AB विततोग्रहणान्सुपर्णाः. २ Mss. °भुजगवज्र°. ३ Mss. पूजारतिद्रोह°. ४ Mss. °भ्युपेतान्.

दृप्तानपि प्रतिनुदन्त्यसुरान् सुरेन्द्रा
दृप्तानपि प्रतिनुदन्त्यसुराः सुरांश्च।
मानाधिरूढमतिभिः समुदीर्णसैन्यै-
स्तैः संहतैरपि तु मृत्युरजय्य एव ॥ ४० ॥

इमामवेत्याप्रतिवार्यरौद्रतां 5 K 231
कृतान्तशत्रोर्भवने न मे मतिः।
न मन्युना स्नेहपरिक्षयेण वा
प्रयामि धर्माय तु निश्चितो वनम् ॥ ४१ ॥

राजोवाच—अथ वने तव क आश्वासः एवमप्रतिक्रिये मृत्युभये सति **धर्मपरिग्रहे च।**

किं त्वा वने न समुपैष्यति मृत्युशत्रु- 10
र्धर्मे[1] स्थिताः किमृषयो न वने विनष्टाः।
सर्वत्र नाम नियतः क्रम एष तत्र
कोऽर्थो विहाय भवनं वनसंश्रयेण ॥ ४२ ॥

बोधिसत्त्व उवाच—

कामं स्थितेषु भवने च वने च मृत्यु- 15
र्धर्मात्मकेषु विगुणेषु च तुल्यवृत्तिः।
धर्मात्मनां भवति न त्वनुतापहेतु-
र्धर्मश्च नाम वन एव सुखं प्रपत्तुम् ॥ ४३ ॥

पश्यतु देवः।

प्रमादमदकन्दर्पलोभद्वेषास्पदे गृहे। 20
तद्विरुद्धस्य धर्मस्य कोऽवकाशपरिग्रहः ॥ ४४ ॥

विकृष्यमाणो बहुभिः कुकर्मभिः
परिग्रहोपार्जनरक्षणाकुलः।
अशान्तचेता व्यसनोदयागमैः
कदा गृहस्थः शममार्गमेष्यति ॥ ४५ ॥ 25

वने तु संत्यक्तकुकार्यविस्तरः
परिग्रहक्लेशविवर्जितः सुखी।
शमैककार्यः परितुष्टमानसः
सुखं च धर्मं च यशांसि चार्छति ॥ ४६ ॥

---

१ A धर्मेस्थिताः.

धर्मश्च रक्षति नरं न धनं बलं वा
धर्मः सुखाय महते न विभूतिसिद्धिः ।
धर्मात्मनश्च मुदमेव करोति मृत्यु-
र्न ह्यस्ति दुर्गतिभयं निरतस्य धर्मे ॥ ४७ ॥

K 232 5 क्रियाविशेषश्च यथा व्यवस्थितः
शुभस्य पापस्य च भिन्नलक्षणः ।
तथा विपाकोऽप्यशुभस्य दुर्गति-
श्चित्रस्य[1] धर्मस्य सुखाश्रया गतिः ॥ ४८ ॥

इत्यनुनीय स महात्मा पितरं कृताभ्यनुज्ञः पित्रा तृणवदपास्य राज्यलक्ष्मीं तपो-
10 वनाश्रयं चकार । तत्र च ध्यानान्यप्रमाणानि चोत्पाद्य[2] तेषु च प्रतिष्ठाप्य लोकं ब्रह्मलोकमधिरुरोह[3] ॥

तदेवं संविग्नमनसां राजलक्ष्मीरपि श्रेयोमार्गं नावृणोतीति संवेगपरिचयः कार्यः । मरणसंज्ञावर्णेऽपि वाच्यम्—एवमाशुमरणसंज्ञा संवेगाय भवतीति । तथा मरणानुस्मृतिवर्णेऽनित्यताकथायामप्युपनेयम्—एवमनित्याः सर्वसंस्कारा इति । तथा सर्वलोकेऽनभिरतिसंज्ञायाम्—
15 एवमनाश्वासिकं संस्कृतमिति । एवमत्राणोऽयमसहायश्च लोक इत्येवमपि वाच्यम् । एवं वने धर्मः सुखं प्रतिपत्तुं न गेह इत्येवमप्युन्नेयम् ॥

॥ इत्ययोगृहजातकं द्वात्रिंशत्तमम् ॥



१ Mss. चित्तस्य for चित्रस्य. २ Mss. चोत्पद्य. ३ Mss. °रुरोहेति.

## ३३ महिषजातकम् ।

सति क्षन्तव्ये क्षमा स्यान्नासतीत्यपकारिणमपि साधवो लाभमिव बहु मन्यन्ते । तद्यथानुश्रूयते—

बोधिसत्त्वः किलान्यतमस्मिन्नरण्यप्रदेशे पङ्कसंपर्कात्परुषवपुर्नीलमेघविच्छेद इव पादचारी वनमहिषवृषो बभूव । स तस्यां दुर्लभधर्मसंज्ञायां संमोहबहुलायामपि तिर्यग्गतौ 5 वर्तमानः पटुविज्ञानत्वान्न धर्मचर्यानिरुद्योगमतिर्बभूव ।

चिरानुवृत्त्येव निबद्धभावा
न तं कदाचित्करुणा मुमोच ।
कोऽपि प्रभावः स तु कर्मणो वा
तस्यैव वा यत्स तथा बभूव ॥ १ ॥ 10

अतश्च नूनं भगवानवोच-
दचिन्त्यतां कर्मविपाकयुक्तेः ।
कृपात्मकः सन्नपि यत्स भेजे
तिर्यग्गतिं तत्र च धर्मसंज्ञाम् ॥ २ ॥

विना न कर्मास्ति गतिप्रबन्धः 15
शुभं न चानिष्टविपाकमस्ति ।
स धर्मसंज्ञी पि तु कर्मलेशां-
स्तांस्तान् समासाद्य तथा तथासीत् ॥ ३ ॥

अथान्यतमो दुष्टवानरस्तस्य कालान्तराभिव्यक्तां प्रकृति[1]भद्रतां दयानुवृत्त्या च विगतक्रोधसंरम्भतामवेत्य नास्माद्भयमस्तीति तं महासत्त्वं तेन तेन विहिंसाक्रमेण 20 भृशतरमबाधत । K 233

दयामृदुषु दुर्जनः पटुतरावलेपोद्धवः
परां व्रजति विक्रियां न हि भयं ततः पश्यति ।
यतस्तु भयशङ्कया सुकुशयापि संस्पृश्यते
विनीत इव नीचकैश्चरति तत्र शान्तोद्धवः ॥ ४ ॥ 25

स कदाचित्तस्य महासत्त्वस्य विस्रब्धप्रसुप्तस्य निद्रावशाद्वा प्रचलायतः सहसैवोपरि निपतति स्म । द्रुममिव कदाचिदेनमधिरुह्य भृशं संचालयामास । क्षुधितस्यापि कदाचिदस्य मार्गमावृत्य व्यतिष्ठत । काष्ठेणाप्येनमेकदा श्रवणयोर्घट्टयामास । सलिलावगा[2]हनसमुत्सुकस्याप्यस्य कदाचिच्छिरः समभिरुह्य पाणिभ्यां नयने समावव्रे । अप्येनमधिरुह्य समुद्यतदण्डः

१ Mss. प्रतिभद्रतां. २ Mss. °वगाहेन समु°.

प्रसह्यैव वाहयन् यमस्य लीलामनुचकार । बोधिसत्त्वोऽपि महासत्त्वः सर्वं तदस्याविनय-चेष्टितमुपकारमिव मन्यमानो निःसंक्षोभसंरम्भमन्युर्मर्षयामास ।

स्वभाव एव पापानां विनयोन्मार्गसंश्रयः ।
अभ्यासात्तत्र च सतामुपकार इव क्षमा ॥ ५ ॥

5 अथ किलान्यतमो यक्षस्तमस्य परिभवममृष्यमाणो भावं वा जिज्ञासमानस्तस्य महासत्त्वस्य तेन दुष्टकपिना वाह्यमानं तं महिषवृषभं मार्गे स्थित्वेदमुवाच—मा तावद्भोः । किं परिक्रीतोऽस्यनेन दुष्टकपिना ? अथ द्यूते पराजितः ? उताहो भयमस्माकिंचिदाशङ्कसे ? उताहो बलमात्मगतं नावैषि यदेवमनेन परिभूय वाह्यसे ? ननु भोः ।

वेगाविद्धं त्वद्विषाणाग्रवज्रं
10 वज्रं भिन्द्याद्द्रुमवद्वा नगेन्द्रान् ।
पादाश्चेमे रोषसंरम्भमुक्ता
मज्जेयुस्ते पङ्कवच्छैलपृष्ठे ॥ ६ ॥

K 234 इदं च शैलोपमसंहतस्थिरं
समग्रशोभं बलसंपदा वपुः ।
15 स्वभावसौजस्कनिरीक्षितोर्जितं
दुरासदं केसरिणोऽपि ते भवेत् ॥ ७ ॥

मथान धृत्वा तदिमं[1] क्षुरेण वा
विषाणकोट्या मदमस्य वोद्धर[2] ।
किमस्य जाल्मस्य कपेरशक्तव-
20 त्प्रबाधनादुःखमिदं तितिक्षसे ॥ ८ ॥

असज्जनः कुत्र यथा चिकित्स्यते
गुणानुवृत्त्या सुखशीलसौम्यया ।
कटूष्णरूक्षाणि हि यत्र सिद्धये
कफात्मको रोग इव प्रसर्पति ॥ ९ ॥

25 अथ बोधिसत्त्वस्तं यक्षमवेक्षमाणः क्षमापक्षपतितमरूक्षाक्षरमित्युवाच—

अवैम्येनं चैलं[3] नूनं सदा चाविनये रतम् ।
अत एव मया त्वस्य युक्तं मर्षयितुं ननु ॥ १० ॥

प्रतिकर्तुमशक्तस्य क्षमा का हि बलीयसि ।
विनयाचारधीरेषु क्षन्तव्यं किं च साधुषु ॥ ११ ॥

---

१ Mss. तदिदं. २ Mss. चोद्धर. ३ Mss. चलं.

शक्त एव तितिक्षते दुर्बलस्खलितं[1] यतः ।
वरं परिभवस्तस्मान्न गुणानां पराभवः ॥ १२ ॥

असत्क्रिया हीनबलाच्च नाम
निर्देशकालः[2] परमो गुणानाम् ।
गुणप्रियस्तत्र किमित्यपेक्ष्य 5
स्वधैर्यभेदाय पराक्रमेत ॥ १३ ॥

नित्यं क्षमायाश्च ननु क्षमायाः
कालः परायत्ततया दुरापः ।
परेण तस्मिन्नुपपादिते च
तत्रैव कोपप्रणयक्रमः कः ॥ १४ ॥ 10

स्वां धर्मपीडामविचिन्त्य योऽयं
मत्पापशुद्ध्यर्थमिव प्रवृत्तः ।
न चेत्क्षमामप्यहमत्र कुर्या-
मन्यः कृतघ्नो बत कीदृशः स्यात् ॥ १५ ॥

यक्ष उवाच—तेन हि न त्वमस्याः कदाचित्प्रबाधनाया मोक्ष्यसे[3]— 15

गुणेष्वबहुमानस्य दुर्जनस्याविनीतताम् ।
क्षमानैभृत्यमत्यक्त्वा कः संकोचयितुं प्रभुः ॥ १६ ॥

बोधिसत्त्व उवाच— K 235

परस्य पीडाप्रणयेन यत्सुखं
निवारणं स्यादसुखोदयस्य वा । 20
सुखार्थिनस्तन्न [4]निषेवितुं क्षमं
न तद्विपाको हि सुखप्रसिद्धये ॥ १७ ॥

क्षमाश्रयादेवमसौ मयार्थतः
प्रबोध्यमानो यदि नावगच्छति ।
निवारयिष्यन्ति त एनमुत्पथा-[5] 25
दमर्षिणो यानयमभ्युपैष्यति ॥ १८ ॥

असत्क्रियां प्राप्य च तद्विधाज्जना-
न्न मादृशेऽप्येवमसौ करिष्यति ।

---

१ AP °स्वरितं; B °स्खरितं. २ Mss. निर्वेशकालः. ३ Mss. मोक्षसे. ४ Mss. निसेवितुं. ५ Mss. एवम्.

न लब्धदोषो हि पुनस्तथाचरे-
दतश्च मुक्तिर्मम सा भविष्यति ॥ १९ ॥

अथ यक्षस्तं महासत्त्वं प्रसादविस्मयबहुमानावर्जितमतिः साधु साध्विति सशिरःप्रकम्पाङ्गुलिविक्षेपमभिसंराध्य तत्तत्प्रियमुवाच—

5 कुतस्तिरश्चामियमीदृशी स्थिति-
र्गुणेष्वसौ चादरविस्तरः कुतः ।
कयापि बुद्ध्या त्विदमास्थितो वपु-
स्तपोवने कोऽपि भवांस्तपस्यति ॥ २० ॥

इत्येनमभिप्रशस्य तं चास्य दुष्टवानरं पृष्ठादवधूय समादिश्य चास्य रक्षाविधानं 10 तत्रैवान्तर्दधे ॥

तदेवं सति क्षन्तव्ये क्षमा स्यान्नासतीत्यपकारिणमपि साधवो लाभमिव बहु मन्यन्ते इति क्षान्तिकथायां वाच्यम् । एवं तिर्यग्गतानां बोधिसत्त्वानां प्रतिसंख्यानसौष्ठवं दृष्टम् । को नाम मनुष्यभूतः प्रव्रजितप्रतिज्ञो वा तद्विकलः शोभेत? इत्येवमपि वाच्यम् । तथागतवर्णे सत्कृत्य धर्मश्रवणे चेति ॥

15 ॥ इति महिषजातकं त्रयस्त्रिंशत्तमम् ॥



१ Mss. प्रकम्प्याङ्गुलि°. २ AB शोभत; P शोभित for शोभेत.

## ३४ शतपत्रजातकम् ।

प्रोत्साह्यमानोऽपि साधुर्नालं पापे प्रवर्तितुमनभ्यासात् । तद्यथानुश्रूयते—

बोधिसत्त्वः किलान्यतमस्मिन् वनप्रदेशे नाना[1]विधरागरुचिरचित्रपत्रः शतपत्रो बभूव । करुणापरिचयाच्च तदवस्थोऽपि न प्राणिहिंसाकलुषां शतपत्रवृत्तिमनुववर्त ।

बालैः प्रवालैः स महीरुहाणां                5
पुष्पाधिवासैर्मधुभिश्च हृद्यैः ।
फलैश्च नानारसगन्धवर्णैः
संतोषवृत्तिं बिभरांचकार ॥ १ ॥

धर्मं परेभ्यः प्रवदन् यथार्ह-                K 236
मार्तान् यथाशक्ति समुद्धरंश्च ।                10
निवारयंश्चाविनयादनार्या-
नुद्भावयामास परार्थचर्याम् ॥ २ ॥

इति परिपाल्यमानस्तेन महासत्त्वेन तस्मिन् वनप्रदेशे सत्त्वकायः साचार्यक इव बन्धुमानिव सवैद्य इव राजन्वानिव सुखमभ्यवर्धत ।

द[2]यामहत्त्वात्परिपाल्यमानो                15
वृद्धिं यथासौ गुणतो जगाम ।
स सत्त्वकायोऽपि तथैव तेन
संरक्ष्य[3]माणो गुणवृद्धिमाप ॥ ३ ॥

अथ कदाचित्स महासत्त्वः सत्त्वानुकम्पया वनान्तराणि समनुविचरंस्तीव्रवेदनाभिभवाद्विचेष्टमानं दिग्धविद्धमिवान्यतमस्मिन् वनप्रदेशे रेणुसंपर्कव्याकुलमलिनकेसरसटं सिंहं 20 ददर्श । समभिगम्य चैनं करुणया परिचोद्यमानः पप्रच्छ—किमिदं मृगराज ? बाढं खल्वकल्यशरीरं त्वां पश्यामि ।

द्विपेषु दर्पाति[4]रंसानुवृत्त्या
जवप्रसङ्गादथवा मृगेषु ।
कृतं तवास्वास्थ्यमिदं श्रमेण                25
व्याधेषुणा वा रुजया कयाचित् ॥ ४ ॥

तद्ब्रूहि वाच्यं मयि चेदिदं ते
यदेव वा कृत्यमिहोच्यतां तत् ।
ममास्ति या मित्रगता च शक्ति-
स्तत्साध्यसौख्यस्य भवान् सुखी च ॥ ५ ॥                30

---

१ AB नानाविविध°. २ B दयान्महत्या; P कृपाजनन्या; A in second hand दयामहत्या for दयामहत्त्वात्. ३ Mss. संरक्षमाणो. ४ Mss. दर्पाभिरसा°.

सिंह उवाच—साधो पक्षिवर न मे श्रमजातमिदमस्वास्थ्यं रुजया व्याधेषुणा वा। इदं त्वस्थिशकलं गलान्तरे विलग्नं शल्यमिव मां भृशं दुनोति । न ह्येनं[1]च्छक्नोम्यभ्यवहर्तुमुद्गरितुं वा । तदेष कालः सुहृदाम् । यथेदानीं जानासि, तथा मां सुखिनं कुरुष्वेति ॥

अथ बोधिसत्त्वः पटुविज्ञानत्वाद्विचिन्त्य शल्योद्धरणोपायं तद्वदनविष्कम्भ[2]प्रमाणं काष्ठ-
5 मादाय तं सिंहमुवाच—या ते शक्तिस्तया सम्यक् तावत्स्वमुखं निर्व्यादेहीति । स तथा चकार। अथ बोधिसत्त्वस्तदस्य काष्ठं दन्तपाल्योरन्तरे सम्यङ्निवेश्य प्रविश्य चास्य गलमूलं तत्तिर्यगवस्थितमस्थिशकलं वदनाग्रेणाभिहत्यैकस्मिन् प्रदेशे समुत्पादितशैथिल्यमितरस्मिन् परिगृह्य
K 237 पर्यन्ते विचकर्ष । निर्गच्छन्नेव तत्तस्य वदनविष्कम्भणकाष्ठं निपातयामास ।

सुदृष्टकर्मा निपुणोऽपि शल्यहृ-
10 न्न तत्प्रयत्नादपि शल्यमुद्धरेत् ।
यदुज्जहारानभियोगसिद्धया
स मेधया जन्मशतानुबद्धया ॥ ६ ॥

उद्धृत्य शल्येन सहैव तस्य
दुःखं च तत्संजनितां शुचं च ।
15 प्रीतः स शल्योद्धरणाद्यथासी-
त्प्रीतः सशल्योद्धरणात्तथासीत् ॥ ७ ॥

धर्मता ह्येषा सज्जनस्य ।

प्रसाध्य सौख्यं व्यसनं निवर्त्य[3] वा
सहापि दुःखेन परस्य सज्जनः ।
20 उपैति तां प्रीतिविशेषसंपदं
न यां स्वसौख्येषु सुखागतेष्वपि ॥ ८ ॥

इति स महासत्त्वस्तस्य तद्दुःखमुपशमय्य प्रीतहृदयस्तमामन्त्र्य सिंहं प्रतिनन्दितस्तेन यथेष्टं जगाम ॥

अथ स कदाचित्प्रविततरुचिरचित्रपत्रः शतपत्रः परिभ्रमन् किंचित्क्वचित्तद्विधमाहार-
25 जातमनासाद्य क्षुदग्निपरिगततनुस्तमेव सिंहमचिरहतस्य हरिणतरुणस्य मांसमुपभुञ्जानं तद्रुधिरानुरञ्जितवदननखरकेसराग्रं संध्याप्रभासमालब्धं शरन्मेघविच्छेदमिव ददर्श ।

कृतोपकारोऽपि तु न प्रसेहे
वक्तुं स याच्ञाविरसाक्षरं तम् ।
विशारदस्यापि हि तस्य लज्जा
30 तत्कालमौनव्रतमादिदेश ॥ ९ ॥

कार्यानुरोधात्तु तथापि तस्य
चक्षुष्पथे ह्रीविधुरं चचार ।

---

१ Mss. एनं for एनत्. २ B P °विस्कम्भण°; A विस्कम्भन° for विष्कम्भप्रमाणं.
३ Mss. निवृत्य.

स चानुपश्यन्नपि तं दुरात्मा
निमन्त्रणामप्यकरोन्न तस्य ॥ १० ॥
शिलातले वीजमिव प्रकीर्णं[1]
हुतं च शान्तोष्मणि भस्मपुञ्जे ।
समप्रकारं फलयोगकाले 5
कृतं कृतघ्ने विदुले[2] च पुष्पम् ॥ ११ ॥

अथ वोधिसत्त्वो नूनमयं मां न प्रत्यभिजानीत इति निर्विशङ्कतरः समभिगम्यैनमर्थिवृत्त्या प्रयुक्तयुक्ताशीर्वादः[3] संविभागमयाचत—

पथ्यमस्तु मृगेन्द्राय विक्रमार्जितवृत्तये ।
अर्थिसंमानमिच्छामि त्वद्यशःपुण्यसाधनम् ॥ १२ ॥ 10

इत्याशीर्वादमधुरमप्युच्यमानोऽथ सिंहः क्रौर्यमात्सर्यपरिचयादनुचितार्यवृत्तिः कोपाग्निदीप्तयातिपिङ्गलया दिधक्षन्निव विवर्तितया दृष्ट्या वोधिसत्त्वमीक्षमाण उवाच—मा तावद्भोः । K 238

दयाक्लैव्यं न यो वेद खादन् विस्फुरतो मृगान् ।
प्रविश्य तस्य मे वक्त्रं यज्जीवसि न तद्बहु ॥ १३ ॥
मां पुनः परिभूयैवमासादयसि याच्ञया । 15
जीवितेन नु खिन्नोऽसि परं लोकं दिदृक्षसे ॥ १४ ॥

अथ वोधिसत्त्वस्तेन तस्य रूक्षाक्षरक्रमेण प्रत्याख्यानवचसा समुपजातव्रीडस्तत्रैव नभः समुत्पपात । पक्षिणो वयमित्यर्थतः पक्षविस्फारणशब्देनैनमुक्त्वा प्रचक्राम ॥

अथान्यतमा वनदेवता तस्य तमसत्कारमसहमाना धैर्यप्रयामजिज्ञासया वा समुत्पत्य तं महासत्त्वमुवाच—पक्षिवर कस्मादिमम्[4]सत्कारमस्य दुरात्मनः कृतोपकारः सन् संविद्यमानायां 20 शक्तावपि मर्षयसि ? कोऽर्थः कृतघ्नेनानेनैवमुपेक्षितेन ?

शक्तस्त्वमस्य नयने वदनाभिघाता-
द्विस्फूर्जितः[5] प्रमथितुं वलशालिनोऽपि ।
दंष्ट्रान्तरस्थमपि चामिषमस्य हर्तुं
तन्मृष्यते किमयमस्य वलावलेपः ॥ १५ ॥ 25

अथ वोधिसत्त्वस्तथाप्यसत्कारविप्रकृतः प्रोत्साह्यमानोऽपि तया वनदेवतया स्वां प्रकृतिभद्रतां प्रदर्शयन्नुवाच—अलमलमनेन क्रमेण । नैष मार्गोऽस्मद्विधानाम् ।

आर्ते प्रवृत्तिः साधूनां कृपया न तु लिप्सया ।
तामवैतु परो मा वा तत्र कोपस्य को विधिः ॥ १६ ॥
वञ्चना सा च तस्यैव यन्न वेत्ति कृतं परः । 30
को हि प्रत्युपकारार्थी तस्य भूयः करिष्यति ॥ १७ ॥

---

१ A व्रीजमभिप्रकीर्णं. २ AB विदुरे. ३ AB °प्रयुक्तसुक्ता°; P प्रमुक्तमुक्ता° for प्रयुक्तयुक्ता°. ४ Mss. इदम् for इमम्. ५ A विस्फूर्जितं.

K 239

उपकर्ता तु धर्मेण परतस्तत्फलेन च।
योगमायाति नियमादिहापि यशसः श्रिया ॥ १८ ॥
कृतश्चेद्धर्म इत्येव कस्तत्रानुशयः पुनः।
अथ प्रत्युपकारार्थमृणदानं न तत्कृतम् ॥ १९ ॥

5 उपकृतं किल वेत्ति न मे पर-
स्तदपकारमिति प्रकरोति यः।
ननु विशोध्य गुणैः स यशस्तनुं
द्विरदवृत्तिमभिप्रतिपद्यते ॥ २० ॥
न वेत्ति चेदुपकृतमातुरः परो

10 न[1] योक्ष्यतेऽपि स गुणकान्तया श्रिया।
सचेतसः पुनरथ को भवेत्क्रमः
समुच्छ्रितं प्रमथितुमात्मनो यशः ॥ २१ ॥

इदं त्वत्र मे युक्तरूपं प्रतिभाति।

यस्मिन् साधूपचीर्णेऽपि मित्रधर्मो न[2] लक्ष्यते।

15 अनिष्ठुरमसंरब्धमपयायाच्छनैस्ततः ॥ २२ ॥

अथ सा देवता तत्सुभाषितप्रसादितमना: साधु साध्विति पुनरुक्तमभिप्रशस्य तत्तत्प्रियमुवाच—

ऋते जटावल्कलधारणश्रमा-
द्भवानृषिस्त्वं विदितायतिर्यतिः।

20 न वेषमात्रं हि मुनित्वसिद्धये
गुणैरुपेतस्त्विह तत्त्वतो मुनिः ॥ २३ ॥

इत्यभिलक्ष्य प्रतिपूज्यैनं तत्रैवान्तर्दधे ॥

तदेवं प्रोत्साह्यमानोऽपि साधुर्नालं पापे प्रवर्तितुमनभ्यासादिति सज्जनप्रशंसायां वाच्यम्। एवं क्षान्तिकथायामप्युपनेयम्—एवं क्षमापरिचयान्न वैरबहुलो भवति, नावद्यबहुलो 25 बहुजनप्रियो मनोज्ञश्चेति। एवं प्रतिसंख्यानबहुलाः स्वां गुणशोभामनुरक्षन्ति पण्डिता इति प्रतिसंख्यानवर्णे वाच्यम्। तथागतमाहात्म्ये च भद्रप्रकृत्यभ्यासवर्णे च—एवं भद्र[3]प्रकृति-रभ्यस्ता तिर्यग्गतानामपि न निवर्तत इति ॥

॥ इति शतपत्रजातकं चतुस्त्रिंशत्तमम् ॥

॥ कृतिरियमार्यशूरपादानाम् ॥

---

१ Mss. न योक्ष्यते तद्गुण°. २ A in marg. विलुप्यते for न लक्ष्यते. ३ Mss. भद्राकृति°.

# प्रथमं परिशिष्टम् ।

## कच्छपजातकम् ।

[This is Kacchapajātaka which is found before Kumbhajātaka (No. 17) in the Paris Ms. (P) only used by Kern. It is rightly relegated to Appendix by him. The text is very corrupt, and I have reproduced it here *without attempting major corrections.*]

अनेकबुद्धविशेषेण भगवता कच्छपभूतो मारस्य हस्तगतो वशगतो पञ्जलगतो मुक्तः। अन्यदापि बुद्धविशे( षे )ण एतस्य मारस्य गतो वशगतो करण्डगतो मुक्तः ॥ भूतपूर्वं हि भुवः अतीतमध्वानं नगरे वाराणसी काशिजनपदे पारिपाडीका नाम नदी तस्य कूले अपरमालाकारस्य वनमालमसौ दानि मालाकाला मालस्यैव तं वनं मालाकाल आगन्त्वा पुष्पाणि उज्जरिय पुष्पकलण्डकमादाय मालाकारणतो निर्धावति । ग्रामाभिमुखो च प्रस्थितो। ततः च नदीतो कच्छपो उद्धरित्वा गोमयं भक्षयति तस्य मालाकारस्य अविदूरे । सो तं मालाकारेण दृष्ट ॥ तस्य एतदभूषि—शोभणं मम अयं अथ कच्छपो ओलंको भविष्यति । तद्यथानुश्रूयते—बोधिसत्त्वः करुणातिशयपरित्यचितमपि परहितसुखोपवादनपरः पुण्यं प्रतिपदमुद्भावयन् दानदमसंयमादिभिः कदचिच्छक्रो देवेन्द्रो बभूव ॥ तेन दानि पुष्पकलण्डं एकान्ते स्थपित्वा सो कच्छपो गृहीतो । सो तं तत्र पुष्पकलण्डं प्रक्षिप्य ( या )ति । तदा सो तं मानुषिकाय वाचाय आह—

> प्राणेनमस्मि यदि मान्सयोगा
>
> इमामहं कर्दमसो च मुक्षिते ।
>
> अनेकतीव्रव्यसनानि तं च
>
> सुरेन्द्र( ल )देवा भुवि कण्डरे वा
>
> निधौतगात्रं उदके सुसिक्ताः ॥

इमाहं कर्दम मुक्तितो । ततः मयं तं पुष्पं कर्दमेन विनासिष्यति । अत्र मे उदके धोवित्वा करण्डे प्रक्षिपतः तदेते पुष्पां न विनश्यन्ति । तदा मालाकारस्य पश्यति—शोभनो खल्वयं कच्छपो मानुषिकाये वाचाये कच्छपो गच्छाहि तं अत्र उदके धोवामि । ततो एष पुष्पाणि न विनाशिष्यति । कर्दमेन मातापैतृकविषये शुण्ठिकपञ्चमानि च अंगानि प्रसारेत्वा तस्य मालाकारहस्तातो भ्रष्टो । तत्र उदके वुड्डताये नदीये अविदूरे त्वातं मुडित्वा तं मालाकारं वाचाये भाषति । तीरमये पारिपात्रिका कृष्यकारणा च मे कालेन शक्तितो कर्दमकृतोऽस्मि पालिके धोविपान पैलाय प्रक्षिप्तः । अथ खलु महात्मः स मालाकारः कच्छपमेतदुवाच—बहुकामये सन्धित सुराज्ञा त्रिगन्धो बहुको समागतः । तत्र च तं भद्रकच्छप करण्डमालकृता तर्हि तत्र रमिष्यतीव ॥ अथ खलु महात्मानः स कच्छपं तं मालाकारं गाथाये अध्यभाषे—

बहुकालं सन्धिता सुराज्ञा त्रिगणो बहुको समागतः।
मत्तो प्रलपेसि मालिक तैल भुञ्जिथ भद्रकच्छपं ॥

तदुपश्रुत्य शक्रो देवेन्द्रः परमविस्मितमनाः साक्षादभिसंराध्य यरित्युवाच—

कच्छपैव खल्वेष महानुभावः
कूर्मेन्द्र स ह्यतिशयप्रभावः।
आवर्जिता यत्कलशा इवेमे
क्षरन्ति रम्यस्तनिताः पयोदाः ॥
महत्प्रमादस्खलितं त्विदं मे
यन्नाम कृत्येषु भवद्विधानां।
लोकाद्यमभ्युद्यतमानसानां
व्यापादयोगा न समभ्युपैमि ॥

इत्येवं कच्छप प्रियवचनैः संराध्य मालाकारहस्तातो मुक्तः। तदाप्यहमेतस्य मालाकारस्य हस्तातो बुद्धिविशेषेण मुक्तरिति ॥

इति श्रीजातकमालायां कच्छपजातकं नाम सप्तदशोऽध्यायः ॥ १७ ॥



# द्वितीयं परिशिष्टम् ।

## श्लोकसूची ।

## तृतीयं परिशिष्टम् ।

### वृत्तसूची ।

[ The following is a list of metres used in *Jātaka-Mālā* by Ārya Śūra. It should be noted that Ārya Śūra does not use स्रग्धरा and मन्दाक्रान्ता or दण्डक, in this work thongh he uses them in the मैत्रकन्यकावदान of दिव्यावदान. ]

उष्णिग्जाति–( र, य, ग ) २३. ३४, ३५, ३६, ३७, ३८, ३९.

अनुष्टुभ्–१. १३, १४, १५, १६, १७, १८, १९, २०; २. १५, १६, १९, २०, २१, २२, २३, २४, ३१, ३२, ३३, ४४, ४५, ४७; ३. १, ८, १३, १६; ४. १; ५. ६, २५; ६. २, ३, ६, १३, १४, १५, १८, २२, २४, २५, ३१, ३६, ३७, ३८; ७. ३, ५, ६, ८, १३, १४, १६, १७, १९, २१, २२, २३, २६, २७, २९, ३२, ३३, ३५; ८. ५, ९, १०, १५, १६, १७, १८, १९, २६, ३१, ३७, ४०, ४४, ५०, ५१, ५२, ५६, ५७, ५८; ९. ६, ७, ८, ९, २१, २२, २४, २७, २८, २९, ३०, ३१, ३२, ३४, ३५, ३६, ३७, ४२, ४३, ४६, ४८, ५५, ५६, ५७, ५८, ५९, ६०, ६१, ६२, ६३, ६४, ६५, ६६, ६७, ६८, ६९, ७०, ७१, ७२, ७३, ७४, ७५, ७६, ७७, ८२, ८३, ८४, ८५, ८६, ८७, ८८, ९१, ९५, ९६, ९८, ९९; १०. १०, १६, ३१, ३४, ३६; ११. ४, ५, ६, ७, ८, ९; १२. २, ३, ५, ६, ७, १०, १३, १४, १५, १६; १३. १०, ११, १३, १४, २१, २२, २४, २५, २७, २८, ३१, ३५, ४०, ४३, ४४; १४. १३, १५, १७, १९, २१, २३, २४, ३०, ३१; १५. ५, ६, ७; १६. १, २, ३; १७. ३, ९, १०, ११; १८. १, २, ४, ९, १०, ११, १२, १३, २१; १९. १, २, ३, ७, ८, ९, १०, २९, ३०, ३२, ३४, ३५, ३६; २०. १, ९, १०; २१. १, ४, ५, २२, २३, २४, ३३, ३४, ३५; २२. २, ३, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७, १८, १९, २०, २१, २४, २६, २८, २९, ३०, ३१, ३२, ३३, ३४, ३५, ३६, ३७, ३८, ३९, ४०, ४१, ४२, ४३, ४५, ४६, ४७, ४८, ४९, ५०, ५२, ५३, ५७, ५८, ५९, ६०, ६१, ६२, ७१, ७२, ७३, ७४, ७५, ७६, ७७, ७८, ७९, ८३, ८४, ८८, ८९, ९०; २३. २, २२,

२३, ३१, ४५, ५०, ५१, ५६; **२४.** ६, ७, ८, ११, १२, २५, २६, २७, २८, २९, ३०, ३१, ३६, ३७, ३८, ३९; **२५.** २, १३, १४, १५, १६, १७; **२६.** १, ८, ९, १०, १२, १३, १८, २२, २३, २४, २५, २६, २७, ३५, ३७, ३८, ३९, ४०, ४१; **२७.** ४, ५, १७, २४; **२८.** ४, ३०, ३१, ३२, ३३, ३७, ४९, ५०, ५१, ५२, ५४, ५७, ६१, ६२, ६३; **३०.** १, २, ३, ४, ५, ६, ७, ८, १३, १४, १५, १८, २०, ३२, ३३, ४१, ४२, ४३, ४४; **३१.** ११, १३, १४, २७, ४१, ४२, ४३, ४४, ४५, ४९, ५३, ६०, ६८, ६९, ७०, ७१, ७३, ७९, ८२, ८३, ८४, ८५, ८६, ८७; **३२.** ५, ६, ७, १५, २०, ४४; **३३.** ५, १०, ११, १२, १६; **३४.** १२, १३, १४, १६, १७, १८, १९, २२.

**अनुष्टुब्जाति**–( वितान or वक्त्र ) **१७.** ५.

**आर्या**–**६.** १६, **२४.** ३, ४; **२९.** १.

**इन्द्रवज्रा**–**१.** ५, २१, २४, २६, ३२; **२.** ५, ७, १०, १२, ४९; **३.** २; **४.** ३, ५, १३; **५.** १२, १५, १६, १७; **६.** ११, २६, २७, २८, ३४; **७.** १८ ( defective ), २८; **८.** २०, ३०, ४६, ६०; **९.** १२, २८, ४०, ५०; **१०.** ४, ६, ७, ३३; **११.** १५; **१२.** ९; **१३.** १९, २०, ३३, ३६; **१४.** १०; **१७.** १९, २४; **१८.** ५, १९; **१९.** १९, २२; **२०.** २८, ३०; **२१.** ११, १९, २१; **२२.** ४, ५, २२, ५५, ८५, ८६; **२३.** ५, १२; **२४.** १७, ३४; **२५.** १८, २२, २७; **२६.** १५, २८; **२७.** १२, १४, १५, २६; **२८.** १३, १४; **२९.** ७, ९, ११, १३, ३३, ३४; **३०.** २२, ३१; **३१.** ८, १९, ३०, ३१, ५८, ५९, ६१, ६२, ६३, ६४; **३४.** ७.

**उपजाति**–**१.** ६, ७, ८, ९, १०, ११, १२, २२, २३, २५, २७, २८, २९, ३०, ३१, ३३; **२.** १, २, ३, ४, ६, ८, ९, ११, १३, १७, १८, २५, २७, २९, ३४, ३६, ३७, ४६, ४८, ५०; **३.** ३, १४; **४.** २, ४, ६, ७, ८, ९, १०, ११, १२, १४, १५, १६, १७, १९, २०; **५.** १, २, ३, ४, ५, ९, १०, ११, १३, १४; **६.** ८, ९, १०, १२, ३२, ३३; **७.** १, २, ९, १०, ११, १२;

८. १, २, ३, ५, ६, ७, ८, १२, १३, २१, २२, २४, २५, २७, २८, २९, ३२, ३३, ३४, ३५, ३६, ३८, ३९, ४१, ४२, ४३, ४५, ४७, ५९; ९. १, २, ३, ४, ५, १०, १२, १४, १५, १६, १७, १८, १९, २३, २५, २६, ४१, ४५, ४७, ४९, ५१, ८०, ९२, ९३, ९४; **१०.** १, २, ५, ८; **११.** १, १४; **१२.** १७, १८, १९, २०, २१; **१३.** १, २, ३, ४, ५, ६, ७, ८, १२, १६, १७, १८, २३, २९, ३०, ३२, ३४, ३७, ३८, ३९, ४१, ४२; **१४.** ३, ४, ५, ६, ७, ८, ९, ११, १६, २५, २६, २७, २८, २९, ३३; **१५.** १, २, ३, ४, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७; **१६.** ४, ५, ६, ८; **१७.** १, २, ४, ८, १८, २६, २७, ३१, ३२, ३३; **१८.** ३, ७, ८; **१९.** ४, ५, ६, ११, १२, १३, १४, १५, १६, १७, १८, २०, २१, २३, २४, २५, ३१; **२०.** ८, ११, १२, १३, १५, १७, १८, १९, २०, २१, २२, २३, २४, २५, २६, २७, २९, ३१, ३२, ३३, ३४, ३५, ३६, ३७; **२१.** २, ३, ६, ७, ८, ९, १०, १२, १३, १४, १५, १६, १७, २०, २५, २६, २९, ३०, ३१, ३२; **२२.** १, २३, २५, २७, ४४, ५१, ५४, ५६, ६३, १००; **२३.** ६, ७, ८, ९, १०, ११, १३, १४, १५, १६, ५७, ५८, ५९; **२४.** २, ९, १०, १३, १४, १५, १६, १८, १९, २०, २१, २२, २३, २४, ४२; **२५.** १, ३, ४, ५, ६, ८, ९, १०, ११, १२, १९, २०, २१, २३, २४, २५, २६, २८; **२६.** ४, ५, ६, १४, १९, २०, २१, २९, ३१, ३६; **२७.** १, २, ३, ६, १०, ११, १३, १६, १८, १९, २०, २१, २२, २३, २५, २७, २८, २९, ३०, ३१, ३२, ३३, ३४; **२८.** १, २, ३, ५, ६, ७, ८, ९, १०, ११, १२, २५, २७, २८, २९, ३४, ३६, ५३, ५८, ५९, ६०, ६४, ६५, ६६, ६७, ६८; **२९.** ५, ६, ८, १०, २९, ४९; **३०.** ९, १०, १६, १९, २१, ३८, ४५; **३१.** १, २, ३, ६, ७, १२, १८, २०, २१, २२, २३, २४, ३२, ३३, ३४, ३५, ३६, ३७, ३८, ३९, ४०, ४७, ४८, ५२, ५४, ५५, ५७, ७५, ७६, ७७, ७८, ८१; **३२.** १, २, ४, ८, ९, १०, ११, १२, १३, १४, १७, १८, १९, २१, २२, २८, २९, ३६, ३७; **३३.** १, २, ३, १३, १४, १५; **३४.** १, २, ३, ४, ५, ९, १०.

४६, ५०, ५१, ५६, ६५, ६६, ६७, ८०, ८८, ८९, ९०, ९१, ९३; **३२.** २३, २४, २५, २७, ३०, ३१, ३२, ३३, ३४, ३८, ३९, ४०, ४२, ४३, ४७; **३४.** १५.

**वंशस्थ (=वंशस्थविल)**–**३.** ७; **५.** ७, २८, २९, ३०, ३१, ३२, ३३; **६.** १, ४, ५, १९, २०, २१; **७.** ३४, ३६, ३७, ३८; **१०.** ३, ९, ११, १२, १३, १४, १९, २०, २१, २२, २३, २४; **१४.** १; **२१.** १८; **२२.** ८०, ८१, ८२, ९१, ९२, ९३, ९४, ९५, ९६, ९७, ९८, ९९; **२३.** १, ३, २७, ३०, ४२, ४३, ४४, ५२, ५३, ५४, ५५, ६०, ६१, ६६, ६७, ६८, ६९, ७०, ७१, ७२; **२४.** १, ३२; **२६.** ११; **२८.** १५, १६, १७, १८, १९, २०, २१, २२, २३, ३९, ४०, ४१, ४२, ४३, ४४, ४५, ४६, ४७, ४८; **२९.** २, ३, १७, १८, १९, २०, २१, २२, २३, २४, २५, ४३, ४४, ५१, ५२, ५३, ५४, ५५, ५६, ५७, ५८; **३०.** ११, १२, १७, २५, २६, २७, २८, २९, ३०, ३५, ३६, ३७, ३९, ४०; **३१.** ४, २८, २९, ७२, ७४, ९४, ९५; **३२.** ३, ३५, ४१, ४५, ४६, ४८; **३३.** ७, ८, ९, १७, १८, १९, २०; **३४.** ६, ८, २३.

**वियोगिनी**–**२०.** २, ३, ४, ५, ६, ७; **२३.** ३२, ३३, ४७, ४८; **२६.** २, ३.

**वैतालीय(अपरवक्त्र)**–**३.** ६; **६.** १७; **७.** ४, २०, २४, २५, ३०, ३१; **८.** ११; **१२.** ४; **१७.** २५; **१८.** १४, १५, १६, १७, १८; **१९.** २८; **२७.** ९; **२८.** ६९; **३१.** ९.

**शार्दूलविक्रीडित**–**२.** २६; **३.** १९, २०, २१; **८.** १४, ४९; **१०.** १८, ३२, ३५; **१४.** २२; **१७.** १२, १३; **२६.** ४४; **२९.** ३७; **३१.** १६.

**शालिनी**–**२.** २८; **३.** २३; **६.** २३, ३५; **९.** १००; **१२.** ८; **१७.** २२; **२३.** ७३; **२८.** ५६; **३१.** १०; **३३.** ६.

**शिखरिणी**–**१७.** १४; **२६.** ४२, ४३; **२८.** २४.

**स्कन्धक**–(१२+१८; १२+१८)–**२९.** ४२.

चतुर्थं परिशिष्टम् ।

आर्यशूरविरचिता

# सुभाषित-रत्नकरण्डक-कथा ।

कलिकाताविश्वविद्यालयप्राध्यापकेन
अनुकूलचन्द्रवन्द्योपाध्यायेन संपादिता ।

*

# SUBHĀṢITA-RATNAKARAṆḌAKA-KATHĀ

OF

ĀRYA ŚŪRA

*Edited by*

Dr. A. C. BANERJEE
University Professor and Head of the Department of Pali
Calcutta University

PUBLISHED BY
THE MITHILA INSTITUTE
OF
Post-Graduate Studies and Research in Sanskrit Learning
Darbhanga

1959

## कथानुक्रमणिका ।



---

# PREFACE

In the following pages is presented for the first time an edition of the *Subhāṣita-Ratnakaraṇḍaka-Kathā* of Ārya Śūra. It is a Buddhist Sanskrit text intended for popularisation of the *saddharma, i. e.*, the excellent religion of the Buddha. It was composed particularly for the use of monk-preachers for inspiring faith in Buddhism in the minds of the laity. In Nepal it has been discovered and is written in Newari characters. A manuscript copy of the text was procured from the Nepal Durbar Library through Dr. S. N. Sen, the then Curator of the Nepal Museum. In the colophon it appears that Ārya Śūra was the author of this text.

The present text contains twentyeight chapters which are all in verses. Some are short, while others are long. The concluding chapter, the *Pāramitākathā*, for instance, contains two ślokas only. The chapters, therefore, are not uniform in extent. It speaks *inter alia* of the six *pāramitās* (perfections), *viz., dāna* (liberality), *śīla* (morality), *kṣānti* (forbearance), *vīrya*, (energy), *dhyāna* (meditation) and *prajñā* (wisdom). These six *pāramitās* (perfections) are frequently referred to in the Mahāyānic code of discipline. Each one of the pāramitās (perfections) here has been extolled and recommended for the attainment of spiritual progress in life. Indeed, this doctrine of the *pāramitā* (perfection) made a strong appeal to the laity and made Buddhism a popular religion. Like other Mahāyāna texts, this text commences with salutation to the Buddha and closes with the following stanza :–

ये धर्मा हेतुप्रभवा हेतुस्तेषां तथागतो ह्यवदत् ।
तेषां यो निरोध एवंवादी महाश्रमणः ॥

The text also appears in Tibetan and there are two Tibetan renderings of it. Both of them are included in Bstan-ḥgyur (Tanjur). One is contained in mDo-ḥgrel, Vol. Gi, folios $127b^1$–$142a^5$ and the other in mDo-ḥgrel, Vol. Ne, folios $214a^2$–$227b^6$ of the Snarthang edition. The Tibetan translations are, as a rule, very faithful and almost verbatim. But the present text on collation with the Tibetan versions is found to have more divergence than agreement. Further, there is a slight difference between the two Tibetan versions. It is, therefore, likely that the Tibetan renderings were made not from the present work but from some other, lost to us. In other words, there were texts other than our present text which the Tibetan translators made use of.

Our manuscript is complete, but it has been badly copied. It is full of mistakes of various types. Even the orthography is sometimes not correct. For collation there is no other manuscript nor any Tibetan translation and so with some difficulty the readings have been settled. The Tibetan versions have occasionally been useful to me.

It should be observed that Ārya Śūra who lived in the 4th century A. D., was one of the famous Buddhist writers of Sanskrit Kāvyas. He writes in an elegant *kāvya* style. It is 'more artistic than artificial'. So far only one work of the author has been available to us in print. The *Jātaka-Mālā* which contains thirty-four *Jātakas* illustrating the *pāramitās* (perfections) of a *bodhisattva* have been published in America (Harvard Oriental Series). In Tibetan, however, five other works besides the *Jātakamālā* are ascribed to Ārya Śūra. They are: *Pāramitāsamāsa*, *Prātimokṣasūtrapaddhati*, *Bodhisattvajātakadharmagaṇḍī*, *Supathādeśaparikathā* and *Subhāṣita-ratnakaraṇḍakakathā*. Sanskrit originals of these texts are all lost. Considering the elegance of style of the *Jātaka-Mālā*, the question naturally arises in one's mind whether the author of the present text is identical with that of the *Jātaka-Mālā*. We know that there were two distinguished Nāgārjunas. One was the promulgator of the Mādhyamika system of thought and the other was a great Tāntric teacher. The two Nāgārjunas lived about four hundred years apart, but they have been carelessly mingled together in Tibetan traditions. Similar may be the case with our poet Ārya Śūra. There were very likely two individuals of the name of Ārya Śūra. One was the author of the *Jātakamālā* and the other was that of the *Subhāṣitaratnakaraṇḍakakathā*. In Tibetan accounts, the two have probably been mistakenly taken as one person.

I take this occasion to express my gratitude to Dr. P. L. Vaidya, M. A. (Cal.), D. Litt (Paris), Retired Director, Mithila Institute of Post-Graduate Studies and Research in Sanskrit Learning, Darbhanga, Bihar, for his kindly including the present text as an appendix to his new edition of the *Jātaka-Mālā*.

University of Calcutta — ANUKUL CHANDRA BANERJEE

23rd July, 1958

आर्यशूरविरचिता

# सुभाषित-रत्नकरण्डक-कथा ।

ॐ नमो बुद्धाय ।

## १

मानुष्यं समवाप्य दुष्करशतैर्लब्ध्वा दुरापं क्षणं
मृत्यौ[1] निष्प्रतिकारदारुणतरे नित्यं पुरःस्थायिनि ।
पाथेयं दमदानसंयममयं यैर्न प्रभूतं कृतं
संसारोग्रमहाप्रपातपतिताः प्राप्स्यन्ति दुःखानि ते ॥ १ ॥
मानुष्यं दुर्लभं प्राप्य विद्युत्संपातचञ्चलम् ।
भवक्षये मतिः कार्या भवोपकरणेषु या ॥ २ ॥
मनुष्यत्वं समासाद्य विद्युज्ज्वालोर्मिचञ्चलम् ।
पुण्यमेवात्र कुर्वीत यतश्चिन्तामणिर्नृणाम् ॥ ३ ॥
यस्यानुभावान्मानुष्यं प्राप्तं भूयोऽपि सांप्रतम् ।
पुण्यं[2] तद्वरमस्तीह यस्माद्धेतुः सुखस्य तत् ॥ ४ ॥
मानुष्यं यदपाश्रयेण भवता लब्धं पुनः सांप्रतं
रूपौदार्यकुलोन्नतिप्रभृतिभिर्युक्तं विचित्रैर्गुणैः ।
तत्पुण्यं सुहृदेकमेव जगतां बन्धुः स[3] जन्मान्तरे
तस्मात्तूर्णमिदं कुरु त्वमसकृत्सर्वार्थसंपत्करम् ॥ ५ ॥
लक्ष्मीनिकेतं यदपाश्रयेण प्राप्तोऽसि लोकाभिमतं प्रभुत्वम् ।
तान्येव पुण्यानि विवर्धयेथा न कर्षणीयो ह्युपकारिपक्षः ॥ ६ ॥
विरमत पापतः कुरुत पुण्यमुदारतरं
दमयत दुर्दमं विषयलोलमनस्तुरगम् ।
भवत मुनीन्द्रवत्[4]परहिताभिरताः सततं
दशति न यावदेव मरणाहिरसह्यविषः ॥ ७ ॥

॥ इति पुण्यप्रोत्साहनकथा ॥ १ ॥

## २

जलनिधिकूर्मकराठ्युगरन्ध्रप्रवेशनवत्[5]
क्षणमवाप्याद्भुतमिमं समवेत्य चलम् ।
प्रशमपुरैकवर्म विनिपातभयापहरं
शृणुत सुदुर्लभं क्षणमपीह मुनेर्वचनम् ॥ ८ ॥

---

१ Ms. मृत्यै. २ Ms. पुण्यन्तद्वद्वयस्वेह. ३ Ms. स्वजन्मान्तरे ४ Ms. मुनिन्द्रवत्.
५ Ms. °समागमं for °प्रवेशनवत्.

यद्दुर्लभं कल्पशतैरनेकै-
मानुष्यमष्टाक्षणदोषमुक्तम् ।
तत्सांप्रतं प्राप्तमतो भवद्भिः
कार्यो हि धर्मश्रवणाय यत्नः ॥ ९ ॥

पल्लवाग्रजलबिन्दुचञ्चले
क्लेशजालपरिवेष्टिते भवे ।
यो न चिन्तयति कर्मसत्पथं
तस्य जन्म भवतीह निष्फलम् ॥ १० ॥

न नरकगतैः प्रेतैस्तिर्यग्गतैर्विकलेन्द्रियै-
रमरगुरुभिः प्रत्यन्तस्थैर्निराकृतदर्शनैः ।
मुनिसवितरि प्रज्ञालोके न वानुदिते जिने
सुनरविबुधैः शक्यं पातुं मुनीन्द्रवचोमृतम् ॥ ११ ॥

तस्मात्कुकार्यं व्यपहाय सर्वं
कुरुष्व कार्यं परमार्थधर्मम् ।
श्रोतव्य एव प्रयतेन[1] धर्मो
यस्मादतः सर्वगुणा भवन्ति ॥ १२ ॥

मौनीन्द्रं वाक्यरत्नं जनयति सुधियामेतदादौ प्रमोदं
श्रोत्रायाते ततश्च प्रबलगुरुघनध्वान्तवृन्दं निहन्ति ।
चिन्ताध्यानावसाने स्फुटयति सकलं जन्मचक्रप्रबन्धं
निःशेषातङ्कपङ्क्तिं विघटयति सदा सर्वसंपन्निधानम् ॥ १३ ॥

हरति तीव्रभवप्रभवं पदं
दिशति निर्वृतिसौख्यमनुत्तरम् ।
तदिदमेवमवेत्य मुनेर्वचः
शृणुत संप्रति निर्मलमानसाः ॥ १४ ॥

॥ इति धर्मश्रवणप्रोत्साहनकथा ॥ २ ॥

३

यत्प्राप्य जन्मजलधेरपि यान्ति पार-
मारोपयन्ति शिवमुत्तमबोधिबीजम् ।
चिन्तामणेरपि समभ्यधिकं गुणौघै-
र्मानुष्यकं क इह तद्विफलीकरोति ॥ १५ ॥

1 Lacuna in Ms. Our reading is based on T. 2 Ms. प्रयत्नेन.

यो मानुष्यं कुशलविभवैः प्राप्य कल्पैरनल्पै-
मोहात्पुण्य[1]द्रविणमिह न खल्पमप्याचिनोति।
सोऽस्माल्लोकात्परमुपगतस्तीव्रमभ्येत्य शोकं
रत्नद्वीपाद्वणिगिव[2] गतः स्वं गृहं शून्यहस्तः ॥ १६ ॥
नाकुशलैः कर्मपथैर्मानुष्यं लभ्यते पुनः।
अलभ्यमाने मानुष्ये दुःखमेव कुतः सुखम् ॥ १७ ॥
अतः परं नास्ति माया[3] न च मोहस्ततः परम्।
यदीदृशं क्षणं प्राप्य न कुर्यात्कुशलं बहु[4] ॥ १८ ॥
एकक्षणकृतात्पापादवीचौ कल्पमास्यते।
नैकजन्मकृतात्पापात्का पुनः सुगतौ कथा ॥ १९ ॥
अत एवाह भगवान् मानुष्यमतिदुर्लभम्।
महार्णवयुगच्छिद्रकूर्मग्रीवार्पणोपमम् ॥ २० ॥

॥ इति दुर्लभमानुष्यकथा ॥ ३ ॥

४

अन्नपानशयनासनसंप-
द्रत्नमाल्यवसनाभरणानि।
कीर्तिरुत्तमगुणौ[5] वि युवत्यो (?)
दानतः कथितमेतदशेषम् ॥ २१ ॥
आज्ञादीप्तिर्भोगसंपत्प्रकृष्टा
रूपौदार्यं वर्णमाधुर्यमोजः।
वाक्सौभाग्यं कान्तिरारोग्यमायु-
स्तत्तद्दानादिष्टमिष्टं फलं च ॥ २२ ॥
अश्वाः क्षौमाणि नागा बहुकुसुमसितं चामलं चातपत्रं
सौधं संगीतिगर्भं मधु पटहरवाः पुष्पमाला युवत्यः।
भोज्यं रत्नानि हाराः पुरनगरमहीदेशना देवलोकः
संबुद्धत्वं च बुद्धैः कथितमिह फलं दानकल्पद्रुमस्य ॥ २३ ॥
यन्नीलोत्पलकोमलामलदलप्रस्पर्धिनेत्राः स्त्रिय-
श्चञ्चन्मेखलचुम्बितोरुजघना विस्रस्तरक्तांशुकाः।
दास्यं यान्ति विकम्पितस्तनतटा व्यावल्गितभ्रूलता-
स्तन्मात्सर्यकपाटपाटनपटोर्दानस्य विस्फूर्जितम् ॥ २४ ॥

---

१ Ms. पुण्ये for पुण्य°. २ Ms. रत्नंद्वणिगिव. ३ Ms वचः for माया. Our reading is based on T. ४ Ms. बहुम्. ५ Ms. गुणेवियुवत्यो.

अश्वैश्चामरभारनामितधरै रूपैः खलीनोन्मुखै-
नर्गैर्भिन्नमदैश्च यन्तुरवरा गच्छन्ति छत्रोच्छ्रयैः।
भूपैः साभरणैः कृताञ्जलिपुटैरभ्यर्च्यमानाः सदा
तद्दानस्य फलं वदन्ति मुनयः पूर्वार्जितस्येदृशम्॥ २५॥

हारैर्वज्रविचित्रहेमवलयैर्यत्पार्थिवा भूषिताः
केयूरैर्मुकुटैश्च रत्नखचितैः सिंहासनस्थाः सदा।
[1]मध्येऽन्तःपुरिकाजनस्य विविधैः क्रीडन्ति विक्रीडितै-
स्तद्दानस्य फलं वदन्ति मुनयः शार्दूलविक्रीडितम्॥ २६॥

प्रासादे मणिरत्नहेमखचिते छत्रध्वजालंकृते
वीणावल्लकिवेणुगीतमुदिते रत्नप्रभोद्भासिते।
यच्छक्रो रमते शचीसहचरो योषित्सहस्राकुले
तद्दानस्य फलं वदन्ति मुनयः पूर्वार्जितस्येदृशम्॥ २७॥

दाता प्रियत्वमुपयाति जनस्य शश्व-
त्संसेव्यते च बहुभिः समुपेत्य सद्भिः।
कीर्तिश्च दिक्षु विसरत्यमलं यशोऽस्य
तत्तत्पदं समुपयान्ति [2]विशालदानात्॥ २८॥

भेदात्कायस्य देवेष्वविकलविविधोत्तप्तभोगास्पदेषु
प्राप्योत्पत्तिं विचित्रां स्तबककुसुमितस्फीतकल्पद्रुमेषु।
उद्यानेषु प्रकामं सुचिरमतिसुखं नन्दनादिष्वखिन्नः
प्राप्नोत्युत्कृष्टरूपामरयुवतिजनैः सेव्यमानः प्रदानात्॥ २९॥

दानं नाम महानिधानमतुलं चौराद्यसाधारणं
दानं मत्सरलोभदोषरजसः प्रक्षालनं चेतसः।
संसाराध्वपरिश्रमापनयनं दानं सुखं वाहनं
दानं नैकसुखोपभोगसुमुखं सन्मित्रमात्यन्तिकम्॥ ३०॥

श्रोणीसंगतमेखलाः कलगिरो लीलाचलैकभ्रुवः
कर्णासन्नविशालचारुनयनाः केशान्तसक्तस्रजः।
[3]यद्दासं स्वयमङ्गनाः सुकृतिनामायान्ति पीनोरव-
स्तन्माहात्म्यमुवाच संभृतफलं दानस्य शौद्धोदनिः॥ ३१॥

निर्यस्यत्सहकारभङ्गसुरभि [4]प्रेङ्खन्तमग्रोत्पलं
श्रीमत्काञ्चनभाजने विनिहितं बन्धूकताम्रं मधु।

---

१ Ms. मध्यन्त°. २ Ms. विशालदासै. ३ Ms. यद्दास्यं. ४ Ms. प्रेक्षन्तिमग्रोत्पलं.

कामिन्या शपथोपनीतमसकृद् यत्पीयते कामिना
हेतुं तत्र वदन्ति शुद्धमुनयो दानं परं श्रेयसः ॥ ३२ ॥
इति दानगुणान्निशम्य सौम्य
प्रयतात्मा कुरु दान एव यानम् ।
त्रिभवोग्रमहाभये नराणां
न हि दानात्परमस्ति बन्धुरन्यः ॥ ३३ ॥
॥ इति दानकथा ॥ ४ ॥

५

यद्दृश्यते जगति चारुतरं प्रियं वा
रूपं कुलं प्रियजनो विभवाः सुखं वा ।
तत्पुण्यशिल्पिकृतमेव वदन्ति सन्तः
कल्याणकारिपुरुषस्य तु पुण्यमेतत् ॥ ३४ ॥
अत्युच्छ्रितोन्नतसितध्वजपङ्क्तिचित्रै-
र्नागाश्वपत्तिरथसंक्षुभितैर्बलौघैः ।
उद्धूतचामरविराजितगात्रशोभाः
पुण्याधिकाः क्षितिभुजो भुवि संचरन्ति ॥ ३५ ॥
कौशेयकौशिकदुकूलविचित्रवस्त्रा
मुक्तावलीकनकरत्नविभूषिताङ्गाः ।
यत्केचिदेव पुरुषाः श्रियमुद्वहन्ति
पुण्यस्य पूर्वचरितस्य कृतज्ञता सा ॥ ३६ ॥
आयुः सुदीर्घं सुकुले च जन्म
कान्तं वपुर्व्याधिर्भयं न चास्ति ।
धनं प्रभुत्वं परिवारसंप-
द्भवन्ति पुण्यस्य महाविपाकाः ॥ ३७ ॥
यच्चक्रवर्तिः प्रवरैस्तु रत्नैः
सहस्रपुत्रैश्च समन्वितोऽपि ।
समुद्रसीमां बुभुजे धरित्रीं
तत्पुण्यरत्नस्य फलं विशालम् ॥ ३८ ॥
विचित्रपद्मासनमध्यसंस्थितः
सुरासुरेन्द्रादिनमस्कृतः सदा ।

१ Ms. सुद्धमुनयो. २ Ms. °चामल°. ३ Ms. °कासिक°. ४ Ms. व्याधितयं.
५ Ms. सहस्रपुत्रैश्च.

यद्ब्रह्मलोकं त्वभिभूय तेजसा
ब्रह्मा सदा भाति तदेव पुण्यतः ॥ ३९ ॥
यद्देवनागासुरसिद्धसंघै-
र्गन्धर्वयक्षाधिपकिन्नरैश्च ।
संपूज्यते देवगुरुः सदैव[1]
तत्पुण्यरत्नस्य फलं विशालम् ॥ ४० ॥
रूपं वीर्यं च शिल्पं च विहाय विवेशा[2] नराः ।
परलोकमितो यान्ति कर्मवायुभिरीरिताः ॥ ४१ ॥
पुण्यं त्वेकमिहात्यन्तमनुगामि सुखोदयम् ।
पुण्यमन्यैरहार्यत्वाद्धनानां प्रवरं धनम् ॥ ४२ ॥
ये मेरुमपि वेगेन विकिरन्ति दिशो दश ।
तेऽपि पुण्यस्य भङ्गाय नालं प्रलयवायवः ॥ ४३ ॥
संवर्तसलिलोद्भूतनिरङ्कुशविसर्पिणा ।
पुण्यं न क्लेदमायाति चतुःसागरवारिणा ॥ ४४ ॥
प्रदीप्तकिरणाङ्गारैः सप्तभिर्भास्करानलैः ।
क्षितौ वा दह्यमानायां पुण्यमेकं न दह्यते ॥ ४५ ॥

इति पुण्यकथा ॥ ५ ॥

६

आढ्यो निर्नष्टशोकः क्षतसकलकलिर्लोचनानन्दपात्रं
सौभाग्यश्रीनिधानं समुपचितबलाक्रान्तगात्रो यशस्वी ।
तेजस्वी कान्तरूपः प्रवचनचतुरो दान्तसर्वेन्द्रियैश्च[3]
व्यङ्गो धीमान् प्रदाता भवति भगवतो[4] बुद्धबिम्बं विधाय ॥ ४६ ॥
यावन्तः परमाणवो भगवतः स्तूपेषु बिम्बेषु वा
तत्कर्तुं दिवि भूतले च नियतं तावन्ति राज्यान्यपि ।
रूपारूप्यसमाधिसंपदखिलं भुक्त्वा च सर्वं सुखं
अन्ते जन्मजराविपत्तिरहितं प्राप्नोति बुद्धं पदम् ॥ ४७ ॥
द्वात्रिंशता भूषितचारुगात्रः
सल्लक्षणैर्लक्षितचक्रवर्ती ।
भवेज्जिनान्ते जितदोषशत्रुः
त( ता ? )थागतां यः प्रतिमां विधत्ते ॥ ४८ ॥

१ Ms. सदेव. २ Ms. रेवसा. ३ Ms. °सर्वेन्द्रियाणो. ४ Ms. भगवतौ.

इन्द्रियाणामवैकल्यं स्त्रीत्वदुर्गतिदूरता।
जन्म मानुष्यकं वंश उच्चैरादेयवाक्यताम्( ता ? ) ॥ ४९ ॥
जातिः श्रुतिः स्मृतिर्धैर्यमभिवाञ्छितसंपदः।
स्थानेष्वभिनिवेशश्च रागादिभिरबाधना ॥ ५० ॥
संबोधिरिति जायन्ते विशेषाः साधुसंमताः।
विधाय बुद्धप्रतिमां स्तूपं वा प्रीणिताः[1] सदा ॥ ५१ ॥
न याति दास्यं न दरिद्रभावं
न प्रेष्यतां नापि च हीनजन्म।
न चापि वैकल्यमिहेन्द्रियाणां
यो लोकनाथप्रतिमां करोति ॥ ५२ ॥
॥ इति बिम्बकथा ॥ ६ ॥

७

नानागन्धैः सुगन्धैः स्नपयति सुगतं पुष्पधूपाङ्गरागै-
र्यो वा पूजां करोति प्रमुदितमनसा श्रव्यवादित्रशब्दैः[2]।
मन्दाकिन्यां विजृम्भत्कनकमयसरोजस्य किञ्जल्करेणु-
व्याप्तायां स्नाति सोऽन्ते सकलकलिमलक्षालितो याति मोक्षम् ॥ ५३ ॥
दिव्यस्त्रीपीनतुङ्गस्तनजघनघनाघातविक्षोभितायां
जृम्भज्जाम्बूनदाब्जच्युतसुरभिरसोद्गारगन्धं क्षिपन्त्याम्।
मन्दाकिन्यां सुरौघाः प्रतिदिनमुदकक्रीडया[3] यद्रमन्ते
नानागन्धोदकेन स्नपनफलमिदं बुद्धभट्टारकस्य ॥ ५४ ॥
मृगमदचन्दनसुकुङ्कुमसमरसं ⏑ ⏑
सुरभिमनोरमासितसितारुणपीतरुचि।
स्नपनमिदं य एव विदधाति मुनेर्मनुजः
स भवति वीतमानसमलो जगुरस्तमलाः ॥ ५५ ॥
इति स्नानकथा ॥ ७ ॥

८

मज्जद्दारविलासिनीकरकुचश्रोण्यूरुविस्फालितां
यत्पीतस्फुटपङ्कजां सुरपतिर्मन्दाकिनीं गाहते।
कान्ताभिः स्मरविह्वलाभिरसकृल्लोकोत्तमायादरा-
त्तद्गन्धोदकपाद्यधूपकुसुमस्रग्गन्धदानात्फलम् ॥ ५६ ॥
यद्राजा चक्रवर्ती वियति गतघनैः कुङ्कुमाम्भःप्रवाहैः
कर्पूरामोदवद्भिर्मलयजसुरभिश्लेषशीतैर्युतायाम्।

---

[1] Ms. प्रोणिता सदा. [2] Ms. श्रव्यरादिव्यशब्दैः. [3] Ms. क्रीदया.

गङ्गायां नङ्गसौख्यं परममनुभवन् मोदते सुन्दरीभि-
स्तत्त्यागात्कुङ्कुमादेर्गुणमणिनिधये चैत्यभट्टारकाय ॥ ५७ ॥

मृदङ्गवीणापटहप्रदानैः
कृत्वा तु पूजां सुगतोत्तमानाम् ।
शृणोति शब्दान् सुरमानुषाणां
श्रोत्रं च दिव्यं लभते विशिष्टम् ॥ ५८ ॥

इति कुङ्कुमादिकथा ॥ ८ ॥

## ९

गजतुरगपदातिस्यन्दनैः सप्तरत्नै-
र्व्रजति सुतसहस्रैर्व्योम्नि यश्चक्रवर्ती ।
शशधरपरिवेषच्छत्ररुद्धार्कपाद-
स्तदपि फलमुदारं छत्रदानात्प्रभूतम् ॥ ५९ ॥

वाचालप्रचलालिचक्रचरणव्यालोलपुष्पोत्कलं
नानावर्णसुगन्धिभूरिकुसुमन्यासेन चित्रीकृतम् ।
छत्रं चारुविचित्रपट्टसहितं चैत्याय यो यच्छति
प्राप्नोति क्षितिपार्चितं स हि चतुर्द्वीपेश्वरत्वं ध्रुवम्[1] ॥ ६० ॥

हेमच्छत्रतिरस्कृतार्ककिरणाः श्रीमद्विनीतद्विप-
स्कन्धस्था बहुरत्नभूषणवराः[2] शक्रर्द्धिविस्पर्धिनः ।
चातुर्द्वीपकचक्रवर्त्यवनिपा यद्यान्ति खे लीलया
तत्ताथागतधातुचैत्यकुसुमच्छत्रप्रदानात्फलम् ॥ ६१ ॥

॥ इति च्छत्रकथा ॥ ९ ॥

## १०

पदे सुगतसंपदां सपदि संप्रतिष्ठा भुवि
प्रकाशितयशा भवत्यखिलसत्त्वधात्वाश्रया ।
समुन्नततरस्थिरकृतिषु संपदा[3] संश्रितो
जिनप्रतिकृतिष्वनेन[4] यदि धातुरारोप्यते ॥ ६२ ॥

शक्रः समन्तादुपगम्य लक्ष्मीं
द्वीपांश्च भुक्त्वा चतुरः[5] सुरेन्द्रः ।
अन्ते विशुद्धं पदमाप्तवांस्त-
द्धातोः समाराधनतो[6] जिनस्य ॥ ६३ ॥

---

१ Ms. ध्रुत्वम्. २ Ms. वज्र° for बहु°. ३ Ms. संप्रदा. ४ Ms. °प्रकृतिजनेन for °प्रतिकृतिष्वनेन. ५ Ms. भूत्वा चतुरो नरेन्द्रः. ६ Ms. समारायणता.

दृश्यन्ते कान्तिमन्तः शशधरवदनाः सुभ्रुवो दीर्घनेत्रा
मर्त्या यस्मिल्ँलोकेवनतकनकनिभाः (?) क्षान्तिसौरत्ययुक्ताः।
पृथ्वीं यच्चापि राजा जलनिधिवसनां पालयंश्चक्रवर्ती
तत्सर्वं बुद्धबिम्बे भवति तनुभृतां धातुमारोप्य भक्त्या ॥ ६४ ॥
॥ इति धात्वारोपणकथा ॥ १० ॥

११

भवति कनकवर्णः सर्वरोगैर्विमुक्तः
सुरमनुजविशिष्टश्चन्द्रवद्दीप्तकान्तिः।
धनकनकसमृद्धो[1] जायते राजवंशे
सुगतवरगृहेऽस्मिन् मण्डलं यः करोति ॥ ६५ ॥
ये प्राप्नुवन्ति सहसैव जनाधिपत्यं
दीर्घायुषो विविधरोगभयैर्[2]विमुक्ताः।
बुद्धस्य ते हि भुवनत्रयपूजितस्य
कृत्वा भवन्ति कुसुमैः सह मण्डलानि ॥ ६६ ॥
दानं गोमयमम्बुना च सहितं शीलं च संमार्जनं
क्षान्तिं क्षुद्रपिपीलिकापनयनं वीर्यं क्रियोत्थापनम्।
ध्यानं तत्क्षणमेकचित्रकरणं प्रज्ञा सुरेखोज्ज्वला
एताः पारमिता यदेव लभते कृत्वा मुनेर्मण्डलम् ॥ ६७ ॥
दिव्यैः सुखैः सकलभोगवरैश्च युक्ता
मर्त्या भवन्ति कनकाधिक[3]कान्तवर्णाः।
पद्मानना अविकलाङ्ग[4]विशालनेत्राः
पुष्पैर्गणस्य विविधैर्वसुधां विचित्य ॥ ६८ ॥
॥ इति मण्डलकथा ॥ ११ ॥

१२

कान्तापाणिसरोजपत्रविधृतां सद्वर्णगन्धोज्ज्वलां
स्वादुस्पर्शसुखां सुराः सुरपुरे यद्देववृन्दारकैः।
भास्वत्काञ्चनभाजनेषु निहितामश्नन्ति दिव्यां सुधां
तद्बुद्धप्रमुखार्यसंघविषयेऽत्यन्[5]तान्नदानात्फलम् ॥ ६९ ॥
मैत्र्या वै सह किंकरैः स्मररिपुं निर्जित्य वज्रासने
क्लेशारीनपि यो दुरन्तविषयानन्तश्चरान् दुर्जनान्।
स्कन्धारातिमविप्रसह्य सुगतौ मृत्युं च नीत्वा वशं
प्राप्तः सर्वरसाग्रतोदवसितः(?) सोप्यन्नदानोदयः ॥ ७० ॥

१ Ms. °समृद्धौ. २ Ms. रागभयैः. ३ Ms. कनकाधिप°. ४ Ms. स्वविकला°. ५ Ms. °न्यत्यन्त°.

संपूर्णसर्वाङ्गसमन्वितं च
सन्मुख्यसंपत्प्रतिभां नवां च ।
आयुर्बलं वर्णमुदाररूपं
प्राप्नोति विद्वान् हि शतप्रदानात् ॥ ७१ ॥
निर्जित्य शत्रून् बलवीर्ययुक्तां( युक्तान् ? )
लक्ष्मीं समासाद्य च ये नरेन्द्राः ।
स्वादूनि भोज्यानि समाप्नुवन्ति
भोज्यप्रदानाद्धि सदा तदेतत् ॥ ७२ ॥
॥ इति भोजनकथा ॥ १२ ॥

१३

प्रेङ्खन्नीलसरोजगर्भममलं यत्पद्मरागात्तुंगं[1]
काम्यं काञ्चनभाजने विनिहितं प्रालेयमिश्रं मधु ।
किंचित्ताम्रविलोचनप्रियतमाप्रत्यर्पितं पीयते
संगीतं ध्वनिसंगतं नरवरैस्तत्त्वन्नदानात्फलम् ॥ ७३ ॥
यद्वैदूर्येन्द्रनीलप्रबलमणिचितैर्भाजनैः शातकौम्भै-[2]
र्देवा दिव्याङ्गनाभिः स्तनकलशभरव्याप्तवक्षःस्थलाभिः ।
पानं प्रीतिप्रसक्ताः सह मधु मधुरं माधवं वा पिबन्ति
प्रोक्तं प्राज्ञैः फलं तद्विवृतगुणगणैर्यस्य दानस्य रम्यम् ॥ ७४ ॥
यत्पानं वर्णगन्धप्रभृतिगुणयुतं कल्पितं तृड्विनाशि[3]
श्लेष्माघातप्रवातप्रशमनचतुरं पिप्पलीखण्डचूर्णम् ।[4]
ग्रीष्मे प्रालेयभिन्नं शशिकरसदृशे भाजने संस्कृतं त-
द्दत्वा संधाय भक्त्यामरभवनगतो दिव्यमाप्नोति पानम् ॥ ७५ ॥
मधुमधुरमुदारमादरेण
प्रवरगणाय ददाति पानकं यः ।
दिवि भुवि स चरेच्च पानदाना-
त्पिबति चिरं प्रवराङ्गनोपनीतः( तम् ? ) ॥ ७६ ॥
श्रद्धाप्रसन्नमनसो भुवि ये मनुष्याः
संधाय पानकवरं प्रदिशन्ति काले ।
संसारपर्वतदरीतटवासैकान्ते[5]
ते प्राप्नुवन्ति मधुरं हि सदा सुपानम् ॥ ७७ ॥
॥ इति पानकथा ॥ १३ ॥

१ Ms. °तुशं. २ Ms साककौम्भैः. ३ Ms. न जुणंति वितगणया. ४ Ms. °घातोप्रवाते-प्रशमन°. ५ Ms. वासंस्यात्त.

१४

ये नीलपीतहरितारुणशुक्लचित्र-
वर्णप्रभेदरुचिरां कलवस्त्रमालाम्।
यच्छन्ति लोकगुरवे सगणोत्तमाय
ते प्राप्नुवन्त्यभिमतप्रवराम्बराणि ॥ ७८ ॥

यः संघायाशेषगुणप्रवराय
श्राद्धो भक्त्या चीवरमालां प्रददाति।
स प्राप्नोति हि वसनं वस्त्रवरिष्ठं
काषायं च क्लेशकषायप्रतिपक्षम् ॥ ७९ ॥

दत्वा सपिङ्गचित्रस्तबकविरचितां नीलपीतावदातै
रक्तैरन्यैश्च रम्यैः सुरुचिरवसनैश्चैवरीचारुकादि।
वाचा मुक्तं सुवस्त्रं सुगतसुतगणायाभिरूपात्मने श्री-
स्त्रीवस्त्रालंकृतात्मा भवति पदमतिः(?)सर्वधर्मेश्वरः सः ॥ ८० ॥

॥ इति वस्त्रकथा ॥ १४ ॥

१५

शक्राधिकप्रवरभोगसमन्वितास्ते
ये चेन्दुकान्तिवपुषो वरकीर्तियुक्ताः।
शक्रान् विजित्य रभसाः सततं भवन्ति
संघस्य शुभ्रकुसुमैः प्रकिरन्ति पूजाम् ॥ ८१ ॥

नीलोत्पलप्रचयतुल्यशरीरगन्धा
विख्यातकीर्तिविमलायतचारुनेत्राः।
रत्नोत्तमासु[1] विचरन्ति मनुष्यभूता
दत्वा जिने प्रवरधूपमुदारगन्धम् ॥ ८२ ॥

वैदूर्यमुक्तामणिभूषिताङ्गाः
कौशेयवस्त्रावृतसर्वकायाः।
नरोत्तमाः सर्वजनैरुपेता
भवन्ति संघे सुरभिप्रदानात् ॥ ८३ ॥

रोगादिभिः प्रबलदुःखकरैर्विमुक्ताः
प्रियाननाः कनकतुल्यमनोज्ञवर्णाः।
राज्यं हि ये विगतकण्टकमाप्नुवन्ति
भैषज्यदानविधिना प्रीणयन्ति संघम् ॥ ८४ ॥

॥ इति पुष्पादिकथा ॥ १५ ॥

---

१ Ms. रत्नायमासु.

१६

यच्चक्रवर्तिक्षितिपप्रधानैः
    कृताञ्जलिं कुण्डलचारुगण्डैः।
भक्त्या स्वमूर्ध्ना[1] बहु मन्यते त-
    द्बुद्धप्रणामात्कथयन्ति प्राज्ञाः॥ ८५॥
ये जातमात्राः (?) प्रभुतां प्रयान्ति
    श्रेष्ठे कुले जन्म सदैव येषाम्।
हस्त्यश्वयानैश्च परिभ्रमन्ति
    कृत्वा तु ते श्रेष्ठतरे प्रणामम्॥ ८६॥
प्रथयति यशो धत्ते श्रेयो विवर्धयते कुलं
    हरति दुरितं सर्वं सर्वं ह्यरातिविशंसनम्।
सुगतनियतां लोके नृणां करोति च सत्क्रियां
    फलति च शिवायान्तेऽवश्यं मुनीन्द्रनमस्क्रियाम्(या?)॥ ८७॥
चक्री नृपो यद्बलकीर्तियुक्तो
    द्वात्रिंशता लक्षणभूषिताङ्गः।
संजायते वै क्षितिपप्रधानो
    बुद्धप्रणामाद्धि फलं तदुक्तम्॥ ८८॥
एवं बहुगुणं मत्वा कायं च क्षणभङ्गुरम्।
बुद्धप्रणामात्को विद्वान् कायकर्म समाचरेत् (?)॥ ८९॥
कः सत्त्वतमः कुर्याद्दृष्ट्वा दूरतः पुनर्भवाद्भीतः (?)।
तस्यैव नमस्कारं भवपारमवाप यद्धेतोः॥ ९०॥
        इति प्रणामकथा॥ १६॥

१७

माला सारङ्गरूपप्रभवमृदुमहद्रोमशश्लाघ्यवस्त्रा
    हेमन्ते गर्भगेहे प्रियतमवनितावाङ्ग(?)युग्मोपगूढाः।
यत्क्रीडन्ति क्षितीशा विविधरसवरै रम्यपानैः समृद्धा-
    स्तत्स्यादुज्ज्वालिकायाः फलमतिमधुरं भिक्षुसंघार्पितायाः॥ ९१॥
ज्वालातरंगविकसद्दहनोपगूढां
    भीमस्वनां शिशिरशीतविनाशकर्त्रीम्।
उज्ज्वालिकां मुनिवरप्रवराय दत्वा
    दीप्तप्रभो भवति देवमनुष्यलोके॥ ९२॥

[1] Ms. सुमूर्ध्ना. [2] Ms. धूलि (?).

गन्धर्वासुरकिन्नरैः सहचरा देदीप्यमानाः सदा
विद्युद्बालशरच्छशाङ्कसदृशाः कान्ताभिरालिङ्गिताः।
स्वर्गे यद्विचरन्ति दीप्तवपुषो लोलायमानाः सुरा-
स्तद्दत्त्वार्यगणाय शीतसमये प्रोज्ज्वालिकां श्रद्धया ॥ ९३ ॥
जित्वा रिपून् ये गजवाजियुक्तान्
पृथ्वीं समन्तादनुशासयन्ति।
दीप्तप्र[1]भा हेमविभूषिताङ्गा
उज्ज्वालिकायाः फलमेव तेषाम् ॥ ९४ ॥
॥ इति उज्ज्वालिकादानकथा ॥ १७ ॥

## १८

धराधरतिरस्कृतं परसुदूरदेशस्थितं
सुसूक्ष्ममपि वस्त्वतितिर[2]स्कैरैरावृतम्।
कराग्र इव [3]संस्थितं यदि न रुद्धं दर्शो[4]
ददर्श सुगतस्य दीपपरिबोधनात्तत्फलम् ॥ ९५ ॥
बुद्धत्वं ** सुगतः प्रदीपकेन
व्याकार्षीन्ननु नगरावलम्बिकायाः।
को दद्याद्भगवति न प्रदीपमालां
प्राप्त्यर्थं विमलमुनीन्द्रलोचनस्य ॥ ९६ ॥
दूरं सूक्ष्मं व्यवहितं दृश्यं पश्यन्ति ये जनाः।
जिनप्रदीपमाला[5]यास्तत्फलं मुनयो जगुः ॥ ९७ ॥
दृश्यन्ते ये क्षितीशाः शशधरवपुषो दीर्घनीलोत्पलाक्षा
देवा यद्देवलोकं वरकनकनिभा भासयन्ति स्वकान्त्या।
राजा यश्चक्रवर्ती मणिकिरणशतैर्भासयन् गां प्रयाति
तत्सर्वं दीपदानाद्भवति तनुभृतां शाक्यसिंहाय भक्त्या ॥ ९८ ॥
लोके य[6]द्भान्ति मर्त्याः कुवलयनयनाः सुभ्रुवो हेमवर्णाः
शक्रो यद्देवराजो दशशतनयनो भाति दिव्यासनस्थः।
यद्ब्रह्मा वीतकामः प्रवरसुरनतो भाति दिव्ये विमाने
दत्वा तद्दीपमालां भवति बहुफलं शास्तृचैत्ये नराणाम् ॥ ९९ ॥
॥ इति प्रदीपकथा ॥ १८ ॥

---

१ Ms. दीप्ततमा. २ Ms. °तिरोस्कैर°. ३ Ms. इव स्थितं. ४ Ms. adds तदिष्टं after दृशा, which metre does not require. ५ Ms. °मालास्व°. ६ Ms. यद्भ्रान्तिमत्यः.

१९

सर्वर्तुरम्यवरहर्म्यतले नरेन्द्राः
संगीतिर्[1]गर्भजडया च गिरा रमन्ते ।
शुद्धान्तवारवनिताभिरशीततायाः-
श्चातुर्दिशार्ययतिसंघविहा[2]रदानात् ॥ १०० ॥

बुद्धप्रचोदनवचोऽपि मुनेरशेष-
मारोच्य आर्ययतिसंघविहारहेतोः ।
यज्जाग्रतोऽपि चरतः स्वपतः स्थितस्य
पुण्याभिवृद्धिरुपविप्रभवप्रमाणम् ( ? ) ॥ १०१ ॥

प्रज्ञावज्रप्रहारप्रविदरितकलिक्ष्माधरस्य प्रसादा-
त्संघस्योद्दिश्य सर्वोपकरणसुभगं यो विहारं करोति ।
प्रासादे वैजयन्ते प्रवरमणिमये स्तम्भभिन्ने प्रियाभिः
सार्धं सर्वर्तुरम्ये दृढं[3]मभिरमते देवलोके स एव ॥ १०२ ॥

श्रीमद्वितानवरपङ्कजचित्रवस्त्रं
नीत्वा दिशः स्थ[4]गितभित्तिगृहं प्रधानम् ।
दत्वा गणाय गुणिने प्रवराय शैक्र[5]-
प्रासादरत्नमधिगच्छति वैजयन्तम् ॥ १०३ ॥
॥ इति विहारकथा ॥ १९ ॥

२०

पर्यङ्कविष्टरसमास्तृततूलि[6]कांस-
सीमन्तिनीघनपयोधरपीडिताङ्गाः ।
संशेरते क्षितिभुजो निशि यैः प्रदत्तं
शय्यासनं स्थ[7]गितदोषगणोत्तमाय ॥ १०४ ॥

दिव्यस्त्रीचारु[8]कायां कलरवकलिते चित्रवस्त्रावृतायां
शय्यायां रत्नमय्यामुरसि परिमलामोदवत्यां महत्याम् ।
कान्ताबाहूपधानश्चिरममरपुरे निर्भयस्तत्र शेते
यत्तच्छय्यासनानां फलमिदमुदितं भिक्षुसंघाय दानात् ॥ १०५ ॥

कर्पूरचन्दनवरागुरुलिप्तगात्रा
दिव्याङ्गनास्तनयुगान्तरवर्तिदेहाः ।

१ Ms. °गर्भजया. २ Ms. °विहारात्. ३ Ms. विढ°. ४ स्थितित°. ५ Ms. शात्तं or शाक्रं. ६ Ms. °तुलिकांस°. ७ Ms. सनित°. ८ Ms. °चारुकाराणां.

निल्यं शयीत[1] (?) वरवस्त्रसुतूलिकायां
स्तूपे परं[2] शयनभूषणदानतस्तत् ॥ १०६ ॥

॥ इति शयनासनदानकथा ॥ २० ॥

२१

यद्द्वीपांश्चतुरो विजित्य रभसाद्यातो मघोनः पुरं
मांधाता त्रिदशाधिपाच्च मुदितो लेभे यदर्धासनम्।
सप्ताहं च हिरण्यवृष्टिरतुला जाताऽस्य[3] यन्मन्दिरे
तत्पात्रप्रतिपादितस्य महतो दानस्य चित्रं फलम् ॥ १०७ ॥

तथा पात्रं चतुर्धा तु गतिदुःखार्त्याधिभेदतः।
पृथक् पृथक् फलं तस्माद्विशिष्टं जायते नृणाम् ॥ १०८ ॥

वृत्तानताः कुवलयेन्दुसमानवर्णा
मर्त्याः सदा विमलदृष्टिविशालवक्षाः।
दानान्मनुष्यगतिकेषु समाप्नुवन्ति
रम्याणि यानशयनासनभोजनानि ॥ १०९ ॥

ग्लानेषु यन्नरवराः प्रदिशन्ति दानं
दीनेषु दुर्बलधनेषु कृपान्विता ये।
यच्चन्द्रवत्प्रवरदेहविशालनेत्रा
बालार्कतुल्यवपुषः शुभकीर्तियुक्ताः।
राज्यं नरा विगतशत्रुभयं लभन्ते
सर्वं हि तत्स्वगुरुमातृजनेषु दानात् ॥ ११० ॥

यद्गच्छन्ति क्षितीशा हयरथकरिभिर्वर्ध( र्ध्य ? )माना जनौघै-
श्छत्रैः सौवर्णदण्डैः शशिकरसदृशै रुद्धतीक्ष्णार्कपादाः।
राजा यच्चक्रवर्ती वरनृपतिशतैर्याति सार्धं पृथिव्यां
क्षेत्रे सम्यक्तदेतत्[4]प्रवरगुणफलैः शोधिते दानबीजात् ॥ १११ ॥

मांधाता मुद्गदानाक्षितिपतिरभवत्पाङ्गु( शु ? )दानादशोको
राजा वै कापिशाख्यस्त्रिदशपतिरभूत्पञ्चसारप्रदानात्।
चित्राख्यः सीर( ? )दानान्मधुपलसयुतं क्षीणदोषाय दत्वा
प्राप्तं( प्तो ? ) वै क्ष्मापतित्वं सुरपतिभवने सिंहनामाधिपत्यम् ॥ ११२ ॥

दत्तं बह्वपि नैव तद्बहुफलं सत्पात्रहीनं धनं
क्षिप्तं वल्वजकण्टकाकुलतले क्षेत्रेऽखिले[5] बीजवत्।

---

१ Ms. शेरते, but it affects metre; our reading offends grammar.
२ Ms. स्तूपापरं शयनासनप्रदानतस्तत्. ३ Ms यातास्य या. ४ Ms. तदेतत्सम्यक्. ५ Ms. क्षेत्रे क्षिवे, probably for क्षेत्रे क्षितेः.

रागद्वेषतमोमलव्यपगते पात्रे गुणालंकृते
दानं स्वल्पमपि प्रयाति बहुतां न्यग्रोधबीजं यथा ॥ ११३ ॥

॥ इति क्षेत्रकथा ॥ २१ ॥

२२

यो धर्मरत्नं लिखतीह नित्यं
शृणोति तच्चिन्तयते सदैव ।
संभावनां वा यदि वात्र कुर्या-
ज्जातिस्मरत्वं लभते स नित्यम् ॥ ११४ ॥

यद्देवलोके वरकल्पवृक्षाः
सर्वार्थसिद्धि[1]प्रभवा भवन्ति ।
देवो[2]त्तमानां सुखहेतुभूता-
[3]स्तद्गोप्रदानस्य फलं विशालम् ॥ ११५ ॥

यद्गर्भे परिपुष्टिमेति शुचिभिः प्रोन्नीयमानो रसैः
कल्पे सन्मधुस[4]र्पिषी पिबति य[5]त्क्षीरं च काले पुनः ।
प्रोद्भि[6]न्नं वरकेशरद्युतियुतं पानं च यद्यौवने
वृद्धत्वे च यथेप्सितं वररसं तद्गोप्रदानोद्भवम् ॥ ११६ ॥

सिंहासनं प्रमुदितो रुचिरङ्गणाय(?)
भक्त्या ददाति विधिवत्खलु यश्च सत्त्वः ।
सिंहासनानि लभते प्रवराणि सद्यो
वज्रासनं च सुरपन्नगसिद्धवन्द्यम् ॥ ११७ ॥

सौवर्णपात्रे सततं नरेन्द्रा
यत्क्षीरमश्नन्ति रसादियुक्तम् ।
लक्ष्मीसमृद्धाश्च नरा लभन्ते
पद्माननास्तन्महिषीप्रदानात् ॥ ११८ ॥

यानप्रदानेन सदातुराणां
सुदुर्बलानां वहनेन चैव ।
संमाननां वै कुरुते गुरूणा-
मृद्धिं समाप्नोति नरस्तु तेन ॥ ११९ ॥

अश्वैर्विचित्रैः सततं भवन्ति
सुव[7]र्णगात्रच्छुरिता नरेन्द्राः ।

---

१ Ms. °सिद्धिकरा which offends metre. २ Ms. केवोत्तमानां. ३ Ms. तं गोप्र°. ४ Ms. °सर्पींसि. ५ Ms. om. यत्. ६ Ms. भिन्दन्दि. ७ Ms. सुवर्णायत्र°.

ऋद्ध्या च गच्छन्ति सुदूरदेशं
 [1]यानप्रदानस्य फलं हि तत्स्यात् ॥ १२० ॥
हारार्धहाराः कटकैरुपेताः
 क्रीडन्ति देवेषु मनोज्ञवर्णाः ।
सार्धं हि यत्र त्रिदशाधिपेन
 निःसङ्गदानात्प्र[2]वदन्ति सन्तः ॥ १२१ ॥
भीतान् समाश्वासयते सदैवा[3]-
 धीरान्नरो वाक्प्रतिपादनेन ।
सर्वान्त[4]मारैः परिभूयतेऽसौ (?)
 वाक्यं च नित्यं मधुरं शृणोति ॥ १२२ ॥
यदर्हयन्तीह जिनस्य वाक्यैः
 क्लेशारिमार्गं भुवि धर्मधातुम् ।
संसारसौख्यं त्वनुभूय सर्वं
 धर्मेश्वरत्वं प्रवरं लभन्ते ॥ १२३ ॥
प्रतिश्रयं ते प्रविशन्ति सन्तः
 सर्वत्र काले श्रमपीडितानाम् ।
ते यान्ति नाकं सततं प्रहृष्टाः
 शक्रेण सार्धं च सदा रमन्ते ॥ १२४ ॥
ये रो[5]पयन्तीह सुकाननानि
 वृक्षांश्च पुष्पाणि च गन्धवन्ति ।
च्युत्वापि ते यान्ति दिवं मनुष्या
 उद्यानमालाद्युपभोगयुक्ताः ॥ १२५ ॥
कुर्वन्ति सेतुं विषमे प्रदेशे
 पानीयमध्येऽपि च ये मनुष्याः ।
स्वर्गं सदाभोगसमन्वितं हि
 यान्त्युत्तमास्ते वरहेमगात्राः ॥ १२६ ॥
वापीतडागानि सुशोभनानि
 कृत्वा नराः स्वर्गमवाप्नुवन्ति ।
इहैव लोके च मनुष्यभूता
 राज्यानि रम्याणि सुखावहानि ॥ १२७ ॥

१ Ms. यानप्रदातुवदेवमत्याः. २ Ms. प्रदवन्ति. ३ Ms. सदैव. ४ Ms. सवैन्तमारैः.
५ Ms. रापयन्ति.

कूपान् मठान् सत्त्वसमाश्रयांश्च
वातातपत्रेषु निमित्तभूतान्।
ये कारयन्ति प्रवरान् मनुष्या-
स्ते[1] देवभूताः सुखिनो भवन्ति ॥ १२८ ॥

छत्राणि ये वा प्रतिपादयन्ति
सूर्याहुता येन( नीह? ) सुदुःखितेषु।
छत्रोपमास्ते जितशत्रुसंघा
भवन्ति नित्यं वरसौख्ययुक्ताः ॥ १२९ ॥

पादाश्रयं चित्रमुपानहौ च
सर्वेषु सत्त्वेषु दिशन्ति भक्त्या।
यानोत्तमैस्ते सुचिरं प्रयान्ति
देवेषु मर्त्येषु सदोपपन्नाः ॥ १३० ॥

शंसन्ति ये जिनवरं गुणकीर्तनेन
कायप्रणामक्रियया च गुरूंश्च सर्वान्।
संमाननां गुरुकुलात्समवाप्नुवन्ति
जातिं तथैव वचनप्रतिसंविदं च ॥ १३१ ॥

मृदङ्गवीणापटहादिभिर्ये
कुर्वन्ति पूजां सुगतोत्तमानाम्।
मनुष्यभूताः[2] सुमनोज्ञवाक्याः
शृण्वन्ति शब्दान् सुमनोज्ञरूपान् ॥ १३२ ॥

यष्टिं समारोपयति प्रहृष्ट-
श्छत्रं च घण्टां सुगतस्य चैत्ये।
छत्रावलीं वा कुरुते स तेन
लक्ष्मीं समाप्नोति बलेन युक्तः ॥ १३३ ॥

मनुष्यभूतो भुवि यः समन्ता-
दीशत्वमाप्नोति नरो विशालम्।
केयूरमुक्ताभरणैरुपेतो
भूमिप्रदानात्तदुशन्ति सन्तः ॥ १३४ ॥

बिम्बं करोति प्रवरं जिनस्य
स्तूपं च छत्रप्रवरैरुपेतम्।

१ Ms. तदेवभूताः. २ Ms. मनुष्यभूतां.

धातुं समारोपयतीह यश्च
स्वर्गं समाप्नोति नरस्तु तेन ॥ १३५ ॥

ये बुद्धमुद्दिश्य महान्ति नित्यं
कुर्वन्ति मृद्गोमयलेपनानि।
पुष्पं फलं भोजनपानकं वा
यच्छन्ति ते राजबलं लभन्ते[1] ॥ १३६ ॥

दीपानुदारान्[2] विविधांश्च गन्ध-
पुष्पाणि धूपं गुडपानकं वा।
दिशन्ति संघस्य तथा च हेम
भवन्ति ते देवसुखेन युक्ताः ॥ १३७ ॥

उज्ज्वालिकां ते(ये?) प्रदिशन्ति सद्भ्यः
शीतागमे वस्तुमथापि गेहम्।
स्तूपाङ्गणं धातुवरं विहारं
ये शोधयन्तीह नराः प्रयत्नैः।
निर्माल्यमेत्य च समुद्धरन्ति
ते हेमवर्णाः सुदृशो भवन्ति ॥ १३८ ॥

उज्ज्वालिकां ये प्रदिशन्ति सद्भ्यः
शीतागमे वस्तुमथापि गेहम्।
यानं विचित्रं वरकन्यकां वा
ते जन्मभूमौ सुखिता भवन्ति ॥ १३९ ॥

दीर्घायुरेव भुवि सर्वरुजां विमुक्तिं
प्राप्नोति सौख्यमतुलं सततं प्रहृष्टः।
देवोद्भवानि विविधानि सुखानि भुङ्क्ते
प्राणातिपातविरतः खलु सोऽपि विद्वान् ॥ १४० ॥

दृष्ट्वा परस्य विभवं न करोति चौर्यं
गुप्तिं च यो न कुरुते परिरक्षणार्थम्।
प्राप्नोत्यसौ द्रविणसंपदमप्रमेयां
सर्वैस्तु तस्करमृगादिशतैरहार्याम् ॥ १४१ ॥

दारान् परस्य परिवर्जयतीह योऽसौ
दारानसौ लभते (ति?) तांश्च मनोज्ञरूपान्।

---

१ Ms. ।रमन्ते. २ Ms. दीपानदारान्.

शत्रूद्भवो न हि जनस्य कदाचिदेव
लोके च वै भवति विश्वसनीय एव ॥ १४२ ॥

नीलोत्पलस्येह यथा हि गन्धो
मनोज्ञरूपः सततं प्रवाति ।
तद्वन्मनुष्यस्य भवन्ति गन्धा
मुखादसत्यं न तु विक्रिया च ॥ १४३ ॥

यन्मित्रसंधिं नृपतेश्च पूजां
भक्त्यान्वितं पुत्रकलत्रभृत्यम् ।
भोगानुदारान् सुखमप्रमेयं
प्राप्नोति नित्यं पिशुनाद्विमुक्तः ॥ १४४ ॥

आनन्दशब्दं मधुरं शृणोति
वाक्यानि नित्यं सुमनोज्ञकानि ।
देवेषु मर्त्येषु च जायतेऽसौ
पारुष्यवाक्याद्विरतो नरो[1] यः ॥ १४५ ॥

धर्मार्थसत्त्वनिरता खलु यस्य वाणी
लोके सदा प्रियतमा भवतीह नित्यम् ।
संपूजनां स लभते बहुरत्नजातै-
र्याया च्युतो विबुधलोकमनन्तसौख्यम् ॥ १४६ ॥

स तीव्ररागो भवतीह नैव
भोगैरुदारैः सततं च युक्तः ।
आदर्शवाक्यः पृथुकीर्तियुक्तः
परस्वतृष्णाविगतो हि यो वै ॥ १४७ ॥

प्रासादिकत्वं लभते स नित्यं
स्फीतं सुखं राज्यधनादि लोके ।
ब्रह्मत्वमासादयतीह सम्यङ्
मैत्रस्य चित्तस्य वशान्मनुष्यः ॥ १४८ ॥

स्वर्गापवर्गं समवाप्तुकामै-
र्नरैस्तु नित्यं समुपार्जनीया ।
अस्तित्वदृष्टिः परमा हि यस्मात्
सर्वस्य सा वै कुशलस्य मूलम् ॥ १४९ ॥

---

[1] Ms. नराय.

बुद्धानिराकृतमतिस्तु[1] विलोभनीया
पुण्यान्युदारभुवनत्रयसौख्यकानि।
तस्मान्नरेण विदुषा सततं निषेव्याः
श्राद्धाः समस्तगुणरत्ननिधानभूताः॥ १५०॥

श्रद्धा शुभस्य जननी जननी यथैव
सैवादिजा मनसिजा व्रजतीह वश्या।
श्रद्धाकरेण रहितो न हि बोधिपक्षः
सद्धर्मरत्ननिकरग्रहणे समर्थः॥ १५१॥

भ्रष्टो यथा विपस्या(यथाधिपत्या?) दैश्वर्यफलानि न ह्यवाप्नोति।
श्रद्धेन्द्रियविभ्रष्टो न तथार्यफलान्यवाप्नोति॥ १५२॥

तस्मान्नरेण विदुषा सुगतादिकेषु
कार्यं मनःप्रसदनं सततं हि तेषु।
निःशेषदोषसनयाम्व(?) न चान्यदस्ति
श्रद्धा यथा दहति दोषगणं समस्तम्॥ १५३॥

दीनाः कुवाससो मूढाः कपालाङ्कितपाणयः।
दर्शयन्त्येव लोकस्य ह्यदातुः फलमीदृशम्॥ १५४॥

दग्धस्थूणासमुच्छ्रयाः प्रतिगृहं प्रेतोपमा भैक्षुकाः
शश्वत्क्षुद्विहता भ्रमन्ति यदमी देहीति बाहूच्छ्रिताः।
दूरं[2]प्रज्ञदशामुपेत्य बहुधा व्यावृत्य तिष्ठन्त्यपि
प्रायोऽल्पं सकृदप्यमीभिरशनं दत्तं न कस्मैचन॥ १५५॥

सूचीमुखाः कुहरनेत्रविशुष्कगात्राः
केशाम्बरा रविकरैः परिवीतवेशाः।
प्रेताः सदा सलिललाभाशया यदार्ता-
स्तै[3]था (?) न दानविकलेन फलं च वेत्ति (?)॥ १५६॥

दानं सर्वसुखं महाभयहरं भोग्यं महाचार्थदं (?)
नानाकारविशालभोगसुपदं तद्वै गुणालंकृतम्।
तस्माद्दानमनेकदोषशमनं संसारघोरापहं
क्षुत्तृ[4]ष्णादिसुशोषणं शुभकरं कुर्युर्नरा यत्नतः॥ १५७॥

॥ इति विचित्रकथा॥ २२॥

---

१ Ms. °मतेन्तविलोहतीह. २ Ms. corrupt and illegible. ३ Ms. corrupt and illegible. ४ Ms. क्षुत्तृणां च.

[ संग्रहश्लोकाः—

पुण्योत्साहनं श्रवणं दुर्लभं त्यागपुण्ययोः ।
विम्बं स्थानं तथा गन्धश्छत्रं धातोश्च रोपणम् ॥ १ ॥
मण्डलं भोजनं यानं वस्त्रं पुष्पादिवर्णनम् ।
प्रणामोज्ज्वालिकादीपविहारशयनासनम् ॥ २ ॥
क्षेत्रं विचित्रं चैवान्तःशल्येता ( ? ) बहुधा भृशम् ।
कथा द्वाविं[1]शतिः प्रोक्ता भूयो दानस्य वर्ण्यते ॥ ३ ॥ ]

२३

यथा हि पूर्णः स न जङ्गमो ह्रदः
　प्रफुल्लशाखश्च सकण्टको द्रुमः ।
श्रुतेन वित्तेन कुलेन वं[2]ञ्चित-
　स्तथाविधः शीलपराङ्मुखो जनः ॥ १५८ ॥
वरं दरिद्रोऽपि सुशीलवान् भवे-
　न्न चार्थवानप्यनलंकृतो गुणैः ।
दरिद्रभावेऽपि हि सज्जनः स्तु[3]तो
　रसो गुणानाममृताद्विशिष्यते ॥ १५९ ॥
संमानयन्ति गुरवो गुणवन्तमार्या-
　स्तेजस्विनोऽपि धनिनोऽपि मनस्विनोऽपि ।
तस्मान्नरो नरपतेरपि यंसकाका ( ? )
　तस्मात्तमिच्छति स रक्षतु शीलमेव ॥ १६० ॥
लोके सुखं विषयजं सभयं सै[4]वैरं
　धर्मात्मनः कृतमतेः सुखमुत्तमं तु ।
तस्मान्नरः सुखमुदारमहार्यमार्गं
　यः प्राप्तुमिच्छति स रक्षतु शीलमेव ॥ १६१ ॥
यो भ्रष्टशीलविनै[5]यः स विनाशकाले
　त्रासं समाविशति शीलवतो न शास्ति ।
तस्मात्प्रकृष्टविनयो वरलोचनं ते ( ? )
　योगं तु पृच्छति स रक्षतु शीलमेव ॥ १६२ ॥
शीलेन निश्चयदृढेन दिवं प्रयाति
　नाँ[6]न्यत्र ** न कुदृष्टिकृतैर्विमार्गैः ।

---

१ Ms. द्वात्रिंशतिः, but T confirms our reading. २ Ms. वल्वितः. ३ Ms. स्ततो. ४ Ms. सवैवं. ५ Ms. विनयस्य. ६ Ms. नान्यप्रकूमेन न कुदृष्टिकृतैर्विमार्गैः.

तस्माद्दतेऽपि वनवासमृतेऽपि लिङ्गाद्[1]
यः स्वर्गमिच्छति स रक्षतु शीलमेव ॥ १६३ ॥
शीलं विना प्रहरणावरणानि रक्षा
शीलं धनं परमेवमहार्यमन्यैः[2]।
शीलं स्थिरं व्युपशमेऽप्यनुगामि मित्रं
शीलं विभूषणमृतेऽपि विभूषणेभ्यः ॥ १६४ ॥
न ह्यस्ति शीलसदृशं हितकारि मित्रं
स्निग्धाशयो न खलु शीलसमोऽस्ति बन्धुः।
माता पिता च तनयो[3] न विधातुमिच्छे-
द्यच्छीलमूर्जितफलं हितमादधाति ॥ १६५ ॥

॥ इति शीलकथा ॥ २३ ॥

## २४

सर्वमेतत्सुचरितं दानं सुगतपूजनम्[4]।
कृतं कल्पसहस्रैर्यत्प्रतिघं प्रतिहन्ति तत्[5] ॥ १६६ ॥
न च द्वेषसमं पापं न च क्षान्तिसमं तपः।
तस्मात्क्षान्तिं प्रयत्नेन भावयेद्विविधैः शीलैः ॥ १६७ ॥
मनः शमं[5] न गृह्णाति न प्रीतिं सुखमश्नुते।
न[6] निद्रा (द्रां?) नश्यति द्वेषं द्वेषशल्ये[7] हृदि स्थिते[8] ॥ १६८ ॥
न द्विषन्तः क्षयं यान्ति यावज्जीवमपि घ्नतः।
क्रोधमेकं तु यो हन्यात्तेन सर्वद्विषो हताः ॥ १६९ ॥
विकल्पेन्धनदीप्तेन जन्तुः क्रोधहविर्भुजा।
दहत्यात्मा वनं चादौ(?) परं धक्ष्यति वा नरान् ॥ १७० ॥
जरा रूपवतां क्रोधः (शत्रुः ?) तमश्चक्षुष्मतामपि।
वधाद्धर्मार्थकामानां तस्मात्क्रोधं निवारयेत् ॥ १७१ ॥
मत्कर्मचोदिता ह्येते यतस्तेऽप्युपकारिणः।
ये च यास्यन्ति नरकान् मयैवैते[9] समुद्धृताः(?) ॥ १७२ ॥
एतानाश्रित्य मे पापं क्षीयते क्षमतो बहु।
मामाश्रित्य च यान्त्येते नरकादीर्घवेदनात् ॥ १७३ ॥
अहमेवापकार्येषां ममैते चोपकारिणः।
कस्माद्विपर्ययं कृत्वा खलु चेतः प्रकुप्यसि ॥ १७४ ॥

---

१ Ms. लिङ्गा. २ Ms. परमार्थमहार्यं°. ३ Ms. तनया च. ४ Ms. सुत°. ५ Ms. समं. ६ Ms. निवद्रानष्टतिं. ७ Ms. °शल्यं. ८ Ms. स्थितं. ९ Ms. मयैवैनेहतातत.

मुख्यं दाण्डादिकं हित्वा प्रेरके यदि कुप्यसि ।
द्वेषेणं[1] प्रेरितः सोऽपि द्वेषे द्वेषस्तु मे वरम् ॥ १७५ ॥

॥ इति क्षान्तिकथा ॥ २४ ॥

२५

वीर्यं हि सर्वगुणरत्ननिधानभूतं
सर्वापदस्तरणि वीर्यमहाप्लवेन ।
नैवास्ति तज्जगति वस्तु विचिन्त्यमानं
नावाप्नुयाद्यदिह वीर्यरथाधिरूढः ॥ १७६ ॥

युद्धेषु यत्करितुरंगपदातिमत्सु
नाराचतोमरपरश्वधसंकुलेषु ।
हत्वा रिपूञ्जयमनुत्तममाप्नुवन्ति
विस्फूर्जितं तदिह वीर्यमहामद(गज?)स्य ॥ १७७ ॥

अम्भोनिधीन् मकरवृन्दविघट्टिताम्बूं-
स्तुङ्गाकुलाकुलतरंगविभङ्गवन्तः[2] (?) ।
वीर्येण गोष्पदमिव प्रविलङ्घ्य शूराः
कुर्वन्त्यनर्घगुणरत्नधनार्जनानि ॥ १७८ ॥

रागादी (दीन्स्?) तुरगानिवोग्रवपुषो विष्कम्भवीर्यान्विताः
शीलं सज्जनचित्तनिर्मलतरं सम्यक्समादापत् (?) ।
मर्त्याः कान्ततरे सुमेरुशिखरे यान्त्येव वीर्यान्विता
मोदन्ते सुरसुन्दरीभुजलतापाशोपगूढाश्चिरम् ॥ १७९ ॥

यद्देवा नियतिविमानवासिनोऽसिनोऽन्ये[3] (?)
निर्द्वन्द्वा समनुभवन्ति सौमनस्यम् ।
अन्त्यं तद्विपुलफलप्रसूतिहेतो-
र्वीर्यस्य स्थिरविहितस्य सा विभूतिः ॥ १८० ॥

॥ इति वीर्यकथा ॥ २५ ॥

२६

क्लेशारिवर्गं त्वभिभूय योगैः[4]
संबोधिलक्ष्मीपदमाप्नुवन्ति ।

---

1 Ms. द्वेषेन. 2 Ms. °विभङ्गंतीमान्. 3 Ms. °वासिनोन्योन्यनिर्द्वंद्वा. 4 Ms. om. योगैः which is supplied from T.

बोध्यङ्गदानं प्रदिशन्ति सद्यो
ध्यानं हि तत्र प्रवदन्ति हेतुम् ॥ १८१ ॥
जन्मप्रबन्धकरणैकनिमित्तभूतान्
रागादिदोषनिचयान् प्रविदार्य सर्वान् ।
आकाशतुल्यमनसः समलोष्टहेमा (?)
ध्यानाद्भवन्ति मनुजा गुणहेतुभूताः ॥ १८२ ॥
जित्वा क्लेशारिवृन्दं शुभवरमथ ते सर्वथा लब्धलक्षं
प्राप्तं संबोधिलक्ष्मी प्रवरगुणमयी दुर्लभामन्यभूमें (?)।
सत्त्वे ज्ञानाधिपत्यं विगलि(त?)रिपुभयाः (?) कुर्वते यन्नरेन्द्रा
ध्यानं तत्रैकहेतुं सकलगुणनिधिं प्राहुरार्या गुणौघाः ॥ १८३ ॥
मोहान्धकारं प्रविदार्य शश्व-
ज्ज्ञानावभासं कुरुते समन्तात् ।
संबुद्धसूर्यः सुरमानुषाणां
हेतुः स तत्र प्रवरः समाधिः ॥ १८४ ॥
॥ इति ध्यानकथा ॥ २६ ॥

२७

प्रज्ञाघनेन विकिरन्ति नरस्य रूप-
मालेख्यरूपमिव सारविहीनमन्तः ।
बुद्ध्यन्वितस्य फलमिष्टमुदेति वीर्या-
द्वीर्यं तु बुद्धिरहितं स्ववधाय शत्रुः ॥ १८५ ॥
योऽनेकजन्मान्तरजं स्वजन्म
भूतं भविष्यत्कुलनामगोत्रः (?)।
मध्यान्तवद्योऽपि जनः प्रवेत्ति
प्रज्ञाबलं[1] तत्कथयन्ति तज्ज्ञाः ॥ १८६ ॥
यद्बुद्धो मर्त्यलोके मलतिमिरगणं दारयित्वा महान्तं
ज्ञानालोकं करोति प्रहरति च सदा दोषवृन्दं नराणाम् ।
आदेष्टा चेन्द्रियाणां वरमनुजमनो वेत्ति सर्वैः प्रकारैः
प्रज्ञा तत्रापि नित्यं शुभवरजननी हेतुमुत्कीर्तयन्ति ॥ १८७ ॥
कार्यार्णवे चापि दृढं निमग्नाः
संग्राममध्ये मनुजाः प्रधानाः ।

1 Ms. प्रज्ञावरं.

प्रज्ञावशात्ते[1] विजयं लभन्ते
प्रज्ञावतस्ते शुभहेतुभूताः ॥ १८८ ॥
तस्मात्सर्वगुणार्थसाधनकरी प्रज्ञैव संवर्धतां
न प्रज्ञाविकला विभान्ति पुरुषाः प्रातः प्रदीपा इव ॥ १८९ ॥

॥ इति प्रज्ञाकथा ॥ २७ ॥

स्वर्गापवर्गगुणरत्ननिधानभूता[2]
एताः षडेव[3] भुवि पारमिता नराणाम्।
ज्ञात्वा नरः स्वहितसाधनतत्परः स्या-
त्कुर्यान्न कः सततमाशु दृढं प्रयत्नम् ॥ १९० ॥

॥ इति पारमितापरिकथा। सुभाषितरत्नकरण्डके[4] समाप्ता[5] ॥

॥ कृतिराचार्यशूरस्य[6] ॥



१ Ms. प्रज्ञावसान्ते. २ Ms. °विधान°. ३ Ms. सदेव. ४ Ms. शुभासित°. ५ Ms. समाप्त. ६ Ms. °सुरस्य. This is followed by ग्रन्थप्रमाणमस्य शतम्। ये धर्मा हेतुप्रभवा हेतुस्तेषां तथागतो ह्यवदत्। तेषां च यो निरोध एवंवादी महाश्रमणः ॥ शुभमस्तु सर्वदा ॥

# श्लोकसूची।

# CRITICAL NOTES

[ Black figures refer to the *Jātaka* in this work. ]

**1.** This Jātaka is not yet traced to any Pali source. It appears to be thus peculiar to the period of transition from Hīnayāna to Mahāyāna form of Buddhism. The first trace of this Jātaka is found in Mūla Sarvāstivāda Vinaya from which Avadāna No. 32 in DA seems to have been taken. Kṣemendra in AK refers to this Jātaka in Avadāna No. 51 ( pages 318–319 ) and also again in Avadāna No. 95 (page 538). Kṣemendra also bodily takes two verses व्याघ्रीमुखावलिविलास° from DA in his AK 51.

**2.** The story of Sibi is well-know in the Purāṇas. In Jātaka 499 and in CP 8 it is found in Pali. AK also in Avadāna No. 91 refers to king Sibi in a slightly different form.

**3.** This Jātaka corresponds to Pali Jātaka No. 415.

**4.** This Jātaka appears under different name in Pali. See J. No. 40 which there is called *Khadiraṅgāra-Jātaka.*

**5.** This Jātaka corresponds to Pali J. No. 40, where its title is *Viṣayhaseṭṭhijātaka.*

**6.** This Jātaka corresponds to J. No. 316 and CP No. 10 where it is called Sasapandita.

**7.** This Jātaka corresponds to J. No. 480 and CP No. 1 where the title is Akitti or Akatti.

**8.** I have not been able to trace the Pali source of this Jātaka, though the topic figures frequently in the Buddhist literature.

**9.** This is one of the most popular stories in Buddhist literature. It corresponds to J. No. 547 and CP No. 9. It also figures in MV 30. 88 and AK No. 29. The story has been sculptured in the Relic Chamber of the Mahā Thūpa in Ceylon and elsewhere.

**10.** I have not been able to trace this Jātaka to Pali sources.

**11.** This Jātaka corresponds to *Kulavakajātaka* in Pali. see J. No. 31

**12.** This Jātaka is not yet traced to Pali sources.

**13.** This Jātaka corresponds to J. No. 527.

**14.** This Jātaka corresponds to J. No. 463.

**15.** This Jātaka corresponds to J. No. 75 and CP No. 30.

**16.** This Jātaka corresponds to J. No. 35 and CP No. 29.

**17.** This Jātaka corresponds to J. No. 512. Many stanzas in the Sanskrit form have a very close correspondence with Pali version.

**18.** Not yet traced to Pali sources.

**19.** This Jātaka corresponds to Pali J. No. 488 and CP No. 24. Note that at the end there is a remark: तच्चेदं जातकं भगवान् व्याकार्षीत्, followed by three stanzas: अहं शारद्वतीपुत्रो etc. Although all Pali Jātakas have दूरेनिदानं, अविदूरेनिदानं and सन्तिकेनिदानं with the main गाथा and its commentary, Āryā Śūra in JM does not include any of these five constituents of a Jātaka. Hence Kern regarded as spurious the portion at the end of this single Jātaka and puts it into brackets.

**20.** This Jātaka corresponds to J. No. 171 where its title is Kalyāṇadhammajātaka.

**21.** This Jātaka corresponds to J. No. 443 and CP No. 14. The sanskritised form चुड्ड used by Kern is unusual. The Pali form is either चुल्ल or चूल equal to क्षुद्र in Sanskrit and means 'smaller or 'younger'. Compare चुलता=चुल्लपिता or क्षुद्रपिता.

**22.** This Jātaka corresponds to J. No. 502.

**23.** This Jātaka corresponds to J. No. 528.

**24.** This Jātaka corresponds to J. No. 407. The story has been sculptured in the Bharhut Stūpa.

**25.** This Jātaka corresponds to J. No. 483.

**26.** This Jātaka corresponds to J. No. 482.

**27.** This Jātaka corresponds to J. No. 407 and CP No. 27 where it is called *Kapirāja.*

**28.** This Jātaka corresponds to J. No. 313. This story is sculptured in Ajanta Caves and stanzas 4, 15 and 19 from this work are engraved under it. The credit of identifying the source of the fragmentary stanzas goes to Dr. H. Lüders. See Yazdani: Ajanta Cave Paintings and Volume of notes thereon.

**29.** and **30.** The Pali source of these Jātakas is not yet traced.

**31.** This Jātaka corresponds to J. No. 537 and CP No. 32. The story is well-known in the Purāṇas under Kalmāṣapāda and also eleswhere like AK 53 and 91.

**32.** This Jātaka corresponds to J. No. 510 and CP No. 23.

**33.** This Jātaka corresponds to J. No. 278 and CP No. 15.

**34.** This Jātaka corresponds to J. No. 308 where its title is *Javasakuṇajātaka.*

It should be noted that although the stories selected by Ārya Śūra are old, the treatment given to them by him varies with the subject-matter. The fame of Ārya Śūra for 'chaste expression' rightly rests on this treatment.

## बौद्धसंस्कृतग्रन्थमालायां प्रकाश्यत्वेन संकल्पिता ग्रन्थाः ।

### १ नव धर्माः

१ ललितविस्तरः ( प्रकाशितम् ) Rs. 10.00 and 12.50

२ समाधिराजसूत्रम् ( यन्त्रस्थम् )

३ लङ्कावतारसूत्रम्

४ अष्टसाहस्रिका प्रज्ञापारमिता आलोकव्याख्यासहिता ( यन्त्रस्था )

५ गण्डव्यूहसूत्रम्

६ सद्धर्मपुण्डरीकसूत्रम्

७ दशभूमिकसूत्रम्

८ सुवर्णप्रभाससूत्रम्

९ तथागतगुह्यकम्

### २ माध्यमिकमते–

१० मध्यमकशास्त्रं नागार्जुनीयम्, आचार्यचन्द्रकीर्तिविरचितया प्रसन्नपदाख्य-व्याख्यया संवलितम्

११ शिक्षासमुच्चयः शान्तिदेवविरचितः ( यन्त्रस्थः )

१२ बोधिचर्यावतारः शान्तिदेवविरचितः प्रज्ञाकरमतिविरचितया पञ्जिकाख्य-व्याख्यया संवलितः

### ३ योगाचारमते–

१३ सूत्रालंकारः आचार्यासङ्गविरचितः

### ४ विनयाः

१४-१५ महावस्तु–लोकोत्तरवादिनां विनयः

१६ मूलसर्वास्तिवादिनां विनयः ( Gilgit Mss. )

### ५ महायानसूत्रसंग्रहः

१७ प्रथमः खण्डः–वज्रच्छेदिका, सुखावतीव्यूहः, कारण्डव्यूहः, राष्ट्रपालपरि-पृच्छा, अर्थविनिश्चयसूत्रं च

१८ द्वितीयः खण्डः–शालिस्तम्बसूत्रम्, प्रतीत्यसमुत्पादसूत्रम्, भैषज्यगुरुवैदूर्य-प्रभसूत्रम्, अन्येषां च सूत्राणां संग्रहः

**६ अवदानसंग्रहः**

१९ अवदानशतकम् ( प्रकाशितम् ) Rs. 10.00 and 12.50

२० दिव्यावदानम् ( प्रकाशितम् ) Rs. 16.00 and 20.00

२१ जातकमाला ( बोधिसत्त्वावदानमाला ) सुभाषितरत्नकरण्डककथा च, आर्यशूरविरचिता ( प्रकाशिता ) Rs. 10.00 and 12.50

२२-२३ अवदानकल्पलता क्षेमेन्द्रविरचिता ( प्रकाशिता ) Rs. 20.00 and 25.00

**७ प्रकीर्णग्रन्थाः**

२४ महायानस्तोत्रसंग्रहः

२५ अश्वघोषग्रन्थाः—बुद्धचरितम्, सौन्दरनन्दम्

---

